# प्रथमोऽध्यायः

नमः सरस्वत्यै ।

सश्रीकं प्रभया युतं रुचिरया प्रोद्भासितं गङ्गया
नानावक्त्रविराजितं शशिकलापीडोच्छ्रयाऽलङ्कृतम् ।
आर्योपेतमुपस्थिताखिलगणस्रक्पूजितं सर्वदा
छंदःशास्त्रमिवेश्वरस्य जयति त्रैलोक्यवंद्यं वपुः ॥ १
कृष्णात्रेयस्य गोत्रे समजनि पुरा दाक्षिणात्याग्रणीर्यो
वेलादित्याभिधानः सुकविरभवद्भास्वरस्तस्य सूनुः ।
तत्पुत्रः सुल्हणाख्यः सुललितपदां वृत्तरत्नाकराख्य-
छंदोवृत्तिं स चक्रे सुकविहृदयानंदनीनामधेयाम् ॥ २

शास्त्रारंभे शास्त्रकार इष्टाधिकृतदेवतानमस्कारपूर्वकशास्त्रसंबंधप्रयोजनं श्लोकत्रयेणाह ।
सुखसंतानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शंकरं लोकशंकरम् ॥ १
वेदार्थशैवशास्त्रज्ञः पव्येकोऽभूद्द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥ २
तेनेदं क्रियते छन्दो लक्षलक्षणसंयुतम् ।
वृत्तरत्नाकरं नाम बालानां सुखबुद्धये ॥ ३

वेदानामर्था वेदार्थाः । शिवो देवता येषां तानि शैवानि शास्त्राणि । वेदार्थाश्च शैवशास्त्राणि च तानि जानातीति स तथोक्तः य पव्येको नाम द्विजोत्तमोऽभूत्तस्य पव्येकस्य केदारनामा शिवचरणाराधनपरः पुत्रोऽस्ति । तेन केदारेणेदं वक्ष्यमाणलक्षणं छन्दः क्रियते । लक्ष्यमुदाहरणं लक्षणं नियताक्षरमात्रागणरचना ताभ्यां संयुतं लक्षलक्षणसंयुतम् । किं नाम । वृत्तरत्नाकरं नाम । वृत्तानि श्रीप्रभृतीनि तान्येव रत्नानि तेषामाकर उत्पत्तिस्थानम् । किमर्थं । सुखसिद्धये । सुखेन सिद्धिः सुखसिद्धिस्तस्यै सुखसिद्धये । केषाम् । बालानां मन्दबुद्धीनाम् । किंकृत्वा । नत्वा । कम् । शंकरं महादेवम् । कथंभूतम् । लोकशंकरं लोकानां शं सुखं करोतीति लोकशंकरस्तम् । पुनः कथंभूतम् । ब्रह्माच्युतार्चितं विरंचिनारायणपूजितम् । पुनः कथंभूतं । गौरीविनायकोपेतं गौरी च विनायकश्च गौरीविनायकौ ताभ्यां उपेतं संयुतम् । किमर्थम् । सुखसंतानसिद्ध्यर्थम् । सुखं परं ब्रह्मानन्दात्मकं संतानः पुत्रपौत्रादि तयोः सिद्धिः प्राप्तिस्तदर्थं सुखसंतानसिद्ध्यर्थम् । नत्वा प्रणम्येति संबंधः । त्रिभिर्विशेषकम् ॥ १-३

छन्दःशब्देन किमुच्यते इत्याह ।
पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा ।
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥ ४

तदिदं शास्त्रे छन्दः कथ्यते । यत्पिंगलादिभिराचार्यैः छन्दःशास्त्रप्रयोक्तृभिरुक्तमभिहितम् । लौकिकं लोके भवं न वैदिकं । काव्यादिषु तस्यानुपयोगात् । द्विधा द्विप्रकारम् । कथमित्याशंकायां मात्रावर्णविभेदेनेत्याह । मात्राभेदेन आर्यादि वर्णभेदेन श्रीप्रभृति वृत्तभेदेनेति ॥ ४

अथ ग्रन्थसंख्यामाह ।
षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ५

अधीयन्त इत्यध्यायास्ते च वक्ष्यमाणलक्षणाः संज्ञाभिधानमात्रावृत्तसमवृत्तार्धसमवृत्तविषमवृत्तषट्प्रत्ययलक्षणाः षडेव षड्भिर्निबद्धस्य छन्दःशास्त्रस्य प्रमाणं संख्या षट्त्रिंशदधिकं शतं विज्ञेयम् ॥ ५

अथ गणनामाह ।
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ६

“गल’ इति प्रथमाक्षरग्रहणमात्रेण गुरुलघुशब्दयोर्ग्रहणमि’त्याम्नायः । एभिर्मयरसतजभनलगैर्दशभिरक्षरैः । समस्तमपि शब्दब्रह्म व्याप्तम् । किमिव । त्रैलोक्यमिव । केन । भवगता नारायणेन । ६

एतेषां प्रत्येकं लक्षणमाह ।
सर्वगुर्मो मुखान्तलौ यरावंतगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ ७

अस्मिन् छन्दःशास्त्रे सर्वे गुरवो यस्यासौ सर्वगुर्मो मगणो यथा (ऽऽऽ) । मुखान्तलौ यरौ मुखमादि अंतर्मध्यं आदौ मध्ये लघू ययोस्तौ मुखान्तलौ यगणरगणौ (।ऽऽ, ऽ।ऽ) । अंतगलौ सतौ । अंते अवसाने गुरुलघू ययोस्तौ सगणतगणौ यथा (।।ऽ, ऽऽ।) । ग्मध्याद्यौ ज्भौ । गुरु मध्ये आदौ ययोस्तौ जगणभगणौ यथा (।ऽ।, ऽ।।) । त्रिलो नः । त्रिलघुर्नगणो यथा (।।।) । एते मयरसतजभनाऽष्टौ गणा भवन्ति वर्णवृत्तगणा भवन्तीत्यर्थः । मात्रागणानां वक्ष्यमाणसूत्रे विधानात् । चतुर्गुर्वादीनामपि गणादिसंज्ञा मा भूदित्याशंक्य नियमन्नाह । त्रिका इति त्रयः परिमाणं येषां ते त्रिका इति । ७

अथ मात्रागणानाह ।
ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुःकलाः ।
गणाश्चतुर्लघूपेताः पंचार्यादिषु संस्थिताः ॥ ८

आर्याप्रभृतिषु मात्रावृत्तेषु चतुःकला पञ्च गणा ज्ञातव्याः । कथम् । सर्वादिमध्यांतगुरवः सर्वे च ते आदिश्च मध्यं च अन्तश्च सर्वादिमध्यांतास्तेषु गुरवो येषां ते सर्वादिमध्यान्तगुरवः । चतुर्भिर्लघुभिरुपेताः सहिता वेदितव्याः । ८

गुरुलघुपरिज्ञानार्थमाह ।
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।
वा पादान्तस्त्वसौ ग्वक्रो ज्ञेयोऽन्यो मातृको लृजुः ॥ ९ इति ।

सहानुस्वारेण वर्तत इति सानुस्वारः । विसर्गान्तः सविसर्गः । दीर्घो द्विमात्रः । युक्तपरः संयोगपरो यो भवति । चकाराद्व्यंजनांतोऽपि गृह्यते । परिमिताक्षरमात्रो गणारचितो वक्ष्यमाणलक्षणो वृत्तस्य चतुर्थांशः पादस्तस्यान्ते वर्तमानो लघुरपि विभाषया गुरुः स्यात् । स च कविसमयव्यवहारात् द्वितीयचतुर्थयोरेव पादयोरन्ते वेदितव्यः । यथा ।
प्रायः समासन्नपराभवानां धियो विपर्यस्ततमा भवन्ति ।
असंभवे हेममयस्य जन्तोस्तथाऽपि रामो लुलुभे मृगाय ॥ इति ।
तथा च ।
'श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि' इत्यादि दृष्टव्यम् ।
स च प्रस्तारे वक्रः स्थाप्य लघुलक्षणमाह । ज्ञेयोऽन्यो मातृको लृजुः । अनुस्वरादिरहितो अन्यो मातृको एकमात्रो वर्णो लघुर्भवति । स च प्रस्तारे ऋजुः सरलः । ९

युक्तपराश्च य इत्यनेन प्राप्ते गुरुत्वे अपवादमाह ।
पदादाविह वर्णस्य संयोगः क्रमसंज्ञिकः ।
पुरःस्थितेन तेन स्याल्लघुताऽपि क्वचिद्गुरोः ॥ १०

विभक्त्यंतं पदं तस्य पदस्यादौ वर्तमानो यो वर्णस्तस्य संयोगः । स इह शास्त्रे क्रमसंज्ञो ज्ञेयः । तेन क्रमेण पुरोवर्तिना प्राक्पदांते वर्तमानस्य प्राप्तगुरुभावस्यापि लघुता स्यात् । क्वचिल्लक्षानुरोधेन । ननु क एषः क्रमो नाम संयोग उच्यते । पूर्वाचार्याणां पिंगलनागप्रभृतीनां कालिदासादीनां च कवीनां समयः परिगृहीतः । संयोगः क्रमसंयोगः । १०

तत्र ग्रसंयोगेन यथा । इदमस्योदाहरणम् ।
तरुणं सर्षपशाकं नवौदनं पिच्छलानि च दधीनि ।
अल्पव्ययेन सुंदरि ग्राम्यजनो मिष्टमश्नाति ॥ ११

ह्रसंयोगेन यथा ।
तव ह्रियापह्रिया मम ह्रीरभूत् शशिगृहेऽपि ह्रतं न धृता ततः ।
वहलभ्रामरमेषकतामसम् मम प्रिये क्व स येष्यति तत्पुनः ॥ इति
निद्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसः
निस्तेजः परिभूयते परिभवान्निर्वेदमागच्छति ।
निर्विण्णः शुचमेति शोकविवशो बुद्ध्याः परिभ्रश्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥
ममैव ते ह्रते । यथा ।
स्नेहाद्गेहाद्ध्रुजगतनयालोककौतूहलेन स्थूलोत्तुंगस्तनभरलसन्मध्यभंगानपेक्षाः ।
पौरा नार्यस्तरलनयनानन्दमुत्पादयन्त्यो धावन्ति स्म द्रुतमपह्रियः स्रंसमानोत्तरीयाः ॥ इति ।

बोधप्रदीपेऽपि यथा ।
यज्ञैर्येषां प्रतिपदमियं मण्डिता भूतधात्री
निर्जित्यैतद्भुवनवलयं यैः प्रदत्तं द्विजेभ्यः ।
तेऽप्येतस्मिन् गुरुभवह्रदे बुद्बुदस्तम्भलीलं
धृत्वा धृत्वा सपदि विलयं भूभुजः संप्रयाताः ॥
शिशुपालवधे यथा ।
प्राप्तनाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रहणाय । इति ।

भ्रसंयोगेन यथा ।
शशिमुखि भ्रमरोऽयं पद्मबुद्ध्याऽऽननं ते ।
समभिलषति पातुं त्यक्तवल्लीप्रसूनः ॥
तथा च ।
भ्रमति भ्रमरमारीकानने विप्रमुक्ते । इत्यादि ।
वरतरुकुसुमेषु व्योमगंगाम्बुजेषु त्रिदशकरिकटेषु स्वर्वधूकुंतलेषु ।
स्थितशयितविबुद्धप्रीतिकस्ते भ्रमोऽयं भ्रमसि भ्रमर येन त्वं मुधा केतकेषु ॥
पदादाविति किम् । अन्यत्र मा भूत् ।

ग्रसंयोगेन यथा ।
असमग्रविलोकनेन किं ते दयितं पश्य वरोरु निर्विशंका ।
न हि जातु कुशाग्रपीतमम्भः सुचिरेणापि करोत्यपेततृष्णम् ॥ इति

ह्रसंयोगेन यथा ।
'आजह्रतुस्तच्चरणौ पृथिव्यामि'ति ।
तथा च ।
प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे ।

भ्रसंयोगेन यथा ।
कुन्दावदातैर्भवतो यशोभिः शुभ्रीकृतं किं परमारवीर ।
अद्यापि यद्बिभ्रति कालिमानमरातिनारीवदनोत्पलानि ॥ इत्यादि ।

क्वचिदिति किम् । सर्वत्र मा भूत् ।

ग्रसंयोगेन यथा ।
'मही पादघाताद्व्रजति सहसा संशयपदम् ।
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहणमि'ति ॥

भ्रसंयोगेन यथा ।
'तत्र भ्रमत्येव मुधा षडंघ्रिरि'ति ।

केचित्पादादाविति मन्यन्ते । तदसंगतम् । सूत्रोदाहरणयोर्घटनाभावात् ।
तथापि ।
तरुणं सर्षपशाकं नवोदनं पिच्छलानि दधीनि ।
अल्पव्ययेन सुंदरि ग्राम्यजनो मिष्टमश्नाति । इत्युदाहरणमार्यया प्रदर्शितम् । आर्यायां पादव्यवस्था नास्ति । पूर्वार्धोत्तरार्धग्रहणात् पूर्वार्धोत्तरार्धमित्यार्यालक्षणं कुर्वाणो ग्रन्थकार एवं ज्ञापयति । तावदार्यायां पादव्यवस्था नास्ति पैंगलीयसूत्रपाठाच्च । स्वराऽर्धञ्चार्यार्धमिति । तस्मात्पदादाविति पाठः । श्रेयानित्यलमिति प्रसंगेन ॥ ११

अथ संज्ञामाह ।
अब्धिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः ।
ज्ञेयः पादः चतुर्थांशो यतिर्विच्छेदसंज्ञिता ॥ १२

तद्यथा । चत्वारोऽब्धिवेदाः । पञ्च शरेन्द्रियाणि । षट्चर्तवः । सप्त स्वरर्षयः । अष्टौ वसवः । नव नंदरन्ध्राणि । दश दिशाः । एकादश रुद्राः । द्वादशादित्याः । त्रयोदश विश्वेदेवाः । चतुर्दश भुवनानि । पञ्चदश तिथय इत्यादि ।

पादलक्षणमाह ।
ज्ञेयो पादः चतुर्थांशो । वक्ष्यमाणलक्षणस्य वृत्तस्य चतुर्थांशो भागः पादसंज्ञो भवेत् ।

अथ यतिमाह ।
यतिर्विच्छेदसंज्ञिता । यतिर्विरामादिराचार्यपारंपर्यागता संज्ञेयमध्यात्पदच्छिन्नाक्षरेषु कर्तव्या । अब्ध्यादि शब्दाद्धि सांकाः कृत्वा यतिरित्यनेन सह संबध्यन्ते । इत्ययमर्थः शिष्यन्ति ।
तत्राहुराचार्याः ।
“यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः ।
समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥
क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥
पूर्वांतवत्स्वरः संधौ क्वचिदेव परादिवत् ।
दृष्टव्यो यतिचिन्तायां यद्यादेशः परादिवत् ॥
[नित्यं प्राक्पदसंबद्धाश्चादयः प्राक्पदान्तवत् ।
परेण नित्यसंबद्धाः प्रादयश्च परादिवत् ॥] ”

यतिः सर्वत्र पादान्ते ।
यथा ।
श्रियः श्रेयकपोलौ तु सम्पूर्णेन्दुसमप्रभौ
प्रतिबिम्बं हरेर्यत्र कस्तूरी मण्डनायते । इत्यादिनेत्वेवं यथा ।
नमस्तस्मै महादेवाय शशिखण्डधारिणे । इति ।

श्लोकार्धे तु विशेषतः ।
यथा ।
राजसेवां विनाऽस्माकं गुणो निष्फलतामगात् ।
अंतःपुरपुरन्ध्रीणां अनर्घ्यामिव मण्डनम् ॥ इति ।
अगादित्यंत्यव्यञ्जनस्यांतःपुरेणेत्यकारेण सह संधिर्न भवति ।
समासेऽपि न त्वेवं यथा ।
सुरासुरशिरोरत्नस्फुरच्चरणमञ्जरी-
पिंजरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवमिति ।

समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ।
व्यक्तविभक्तिके प्रकटविभक्तिके । अव्यक्तविभक्तिके समासान्तविभक्तिके । तयोरुदाहरणं यथा ।
‘यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु’ इति ।
व्यक्ताव्यक्तविभक्तिक इति यतिः सर्वत्र पादान्त इत्यनेन सह संबध्यते । वस्त्रीकृतजगत्कालं कण्ठेकालं नमाम्यहम् ।
महाकालं कलाशेषं शशिलेखाशिखामणिम् ॥
अपि च ।
नमस्तुंगशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरीरंभमूलस्तम्भाय शम्भवे ॥

क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥
यथा ।
‘पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतराशा’विति ।
समुद्रादाविति किम् । पदमध्ययतिर्पदान्ते मा भूत् । यथा ।
‘प्रणमत भवबंधक्लेशनाशाय नारायणचरणसरोजद्वन्द्वमानं दहेतु’रिति ॥

पूर्वोत्तरभागयोरेकाक्षरत्वे तु पदमध्ये यतिर्दुष्यति । यथा ।
‘एतस्या गण्डतलममलं गाहवे चन्द्रकक्षा’मिति ।
‘एतासां राजति सुमनसां दामकण्ठावलम्बी’ति ।
‘संतापं मे जनयति नितम्बोऽयमिन्दीवराक्ष्या’ इति ।

पूर्वान्तवत्स्वरः संधौ क्वचिदेव परादिवत् ।
अस्यार्थः । यो यं पूर्वपरयोरेकदेशः स्वरसंधौ विधीयते स क्वचित्पूर्वान्तवद्भवति क्वचित्परस्यादिवत् ।
पूर्वान्तवद्यथा ।
स्यादस्थानेऽपगतयमुनासंगमे वाऽभिरामा । तथा ।
जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुम् इति ।
परादिवद्भावो यथा । ममैव व्यायोगे ।
ये स्वारातिविदारितास्यसहसैवाभूद्विभिन्नं रणे
वामांगं कलकिंकणीफलकवन्निस्तृंशवद्दक्षिणम् ।
एकं घातनिपातदत्तमितरद्घातप्रतीकारकृद्-
धन्यः पश्यति युध्यमानमिति सस्वांगं विमानस्थितः ॥ इत्यादि ।

यद्यादेशः परादिवद् ।
यथा ।
'सप्तर्षिहस्तावचितावशेषण्येऽधो विवस्वानि'ति ।
आदिशब्दात् 'विततघनतुषारः क्षोदशुभ्रांशुवर्त्म स्वविरले'त्यादि ।

नित्यं प्राक्पदसंबद्धाश्चादयः प्राक्पदान्तवत् ।
तेभ्यः पूर्वा यतिर्न कर्तव्येत्यर्थः । यथा ।
'स्वादुःस्वच्छंदसलिलमिदं प्रीतये कस्य न स्यादि'ति ।

परेण नित्यसंबद्धाः प्रादयश्च परादिवत् ।
तेभ्यः परा यतिर्न कर्तव्येत्यर्थः । यथा ।
'दुःखं मे प्रक्षिपति हृदये दुःसहस्तद्वियोगः' इत्यादि सर्वमूह्यम् ॥ १२

युक्समं विषमं चायुक्स्थानं सद्भिर्निगद्यते । १३(१)

प्रथमतृतीयादिकं स्थानं अयुक् विषमं द्वितीयचतुर्थादिकं स्थानं युक्सममिति ।

अथ वृत्तभेदानाह ।
सममर्धसमं वृत्तं विषमं च तथा परम् ॥ १३(२)

छन्दसि वर्तत इति । वृत्तं वक्ष्यमाणलक्षणं त्रिधा भवति । सममर्धसमं विषमं चेति । तत्र समं सर्वावयवत्वात्समम् श्रीप्रभृति अर्धसममुपचित्रादि विषमं पदचतुरूर्ध्वादि ।

एतेषां प्रत्येकं लक्षणमाह ।
अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छंदशास्त्रतत्त्वज्ञा समं वृत्तं प्रचक्ष्यते ॥ १४

यस्य वृत्तस्य चत्वारोऽपि पादाः समलक्षणभाजो भवन्ति । तद्वृत्तं समं छन्दोविद्भिराचक्ष्यते ।

अथार्धसममाह ।
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥ १५

यस्य वृत्तस्य प्रथमतृतीयपादौ तुल्यलक्षणौ भवतः । द्वितीयचतुर्थौ च । तद्वृत्तं अर्धसममुच्यते ।

विषमलक्षणमाह ।
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १६

यस्य वृत्तस्य चतुर्ष्वपि पादेषु भिन्नमन्यादृशं परस्परं लक्षणं भवति तद्विषममित्याहुराचार्याः ।

अथ वृत्तानां पादं नियमन्नाह ।
आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पृथक्छन्दो भवेत्पादैर्यावत्षड्विंशतिं गतम् ॥ १७

एकाक्षरात्पादादेकैकाक्षरवृद्ध्या पादैः छन्दः स्यात् । किं यावद्गतं षट्विंशत्यक्षरमुत्कृतिं यावत् ।

तदूर्ध्वं चण्डवृष्ट्यादि दण्डकाः परिकीर्तिताः । १८(१)

षड्विंशत्याक्षरोत्कृतिजातेरूर्ध्वं चण्डवृष्टिप्रभृतयो दण्डकाः भवन्ति । शेषमिति प्रकरणम् । तच्च शास्त्रान्तरेभ्योऽवगन्तव्यम् । ग्रन्थगौरवभयात्केदारेणात्र नोक्तम् ।

गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥ १८(२)

शेषं जातिप्रकरणानन्तरं त्रिपद्यः षट्पद्यो गाथाः स्युः ।

अथ छन्दसां जातीराह ।
उक्तात्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च ॥ १९
त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ।
शर्करी सातिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृतेः ॥ २०
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः सङ्कृतिश्चैव तथाभिकृतिरुत्कृतिः ॥ २१
इत्युक्ता छंदसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥ २२

एकाक्षरा उक्ता । द्व्यक्षरा अत्युक्ता । त्र्यक्षरा मध्या । चतुरक्षरा प्रतिष्ठा । पंचाक्षरा सुप्रतिष्ठा । षडक्षरा गायत्री । सप्ताक्षरा उष्णिक् । अष्टाक्षरा अनुष्टुप् । नवाक्षरा बृहती । दशाक्षरा पंक्तिः । एकादशाक्षरा त्रिष्टुप् । द्वादशाक्षरा जगती । त्रयोदशाक्षराऽतिजगती । चतुर्दशाक्षरा शर्करी । पंचदशाक्षरा अतिशर्करी । षोडशाक्षरा अष्टिः । सप्तदशाक्षरा अत्यष्टिः । अष्टादशाक्षरा धृतिः । एकोनविंशत्यक्षरा अतिधृतिः । विंशत्यक्षरा कृतिः । एकविंशत्यक्षरा प्रकृतिः । द्वाविंशत्यक्षरा आकृतिः । त्रयोविंशत्यक्षरा विकृतिः । चतुर्विंशत्यक्षरा संकृतिः । पंचविंशत्यक्षरा अभिकृतिः । षड्विंशत्यक्षरा उत्कृतिः । इति छंदसां संज्ञा उक्ताः ।
अधुना सर्वेषां वृत्तानां लक्षणमभिधास्यामि । लक्ष्यते ज्ञायते अनेनेति लक्षणम् । परं मात्रावृत्तानुपूर्वकम् । मात्रावृत्तान्यार्याप्रभृतीनि प्रथममुक्त्वेत्यर्थः । १९-२२

इति सुल्हणविरचितायां सुकविहृदयानंदिन्यां वृत्तरत्नाकरछंदोवृत्तौ प्रथमोऽध्यायः ॥

# द्वितियोऽध्यायः मात्रावृत्ताध्यायः

मात्रावृत्ताध्यायो द्वितीयः प्रारभ्यते ।
मात्रावृत्तानुपूर्वकमित्युक्तत्वात् ।
लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं च नलघु वा प्रथमेऽर्धे नियतमार्यायाः ॥ १
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्धे पंचमके तस्मादिह भवति षष्ठो लः ॥ २

आर्याया एतल्लक्ष्म लक्षणम् । सप्त चतुष्कला गणा गुरुणा उपेता युक्ता भवन्ति । सामान्येनाभिधाय विशेषमाह । भवति नेह विषमे जः इति । इह आर्यालक्षणे विषमे स्थाने प्रथमतृतीयादौ जो जगणो न भवति । षष्ठश्चायं जगणो भवति । नलघु वा । नगणयुक्तो लघु वा भवति । नियतं निश्चितमार्यायाः । प्रथमेऽर्धे आद्ये दले इति । चरमेऽर्धे द्वितीयेऽर्धे षष्ठो लघुरेवेति नियमः । एवमुभयोरप्यर्धयोर्लक्षणमभिधाय पदनियममाह । षष्ठे द्वितीयलादिति । षष्ठे गणे सर्वलघौ द्वितीयाल्लघ्वक्षरादारभ्य पदं भवति । सप्तमश्चेत्सर्वलघुगणो भवति तदा प्रथमाक्षरादारभ्य पदं चरमेऽर्धे पंचमके द्वितीयेऽर्धे पंचमे सर्वलघौ गणे तस्मात्पूर्वोक्तात् । प्रथमाक्षराल्लघ्वक्षरादारभ्य पदनियमो भवति । इति । अत्रार्धग्रहणात्पादव्यवस्था नास्तीति एतच्च प्रथमाध्याय एव पदादाविति सूत्रे प्रपंचितमस्ति ।
क्रमेणोदाहरणं यथा ।
वंदारुदेववृन्दैरहमहमिकया सदैव या वंद्या ।
स्वर्गापवर्गदात्रीं तामार्यां संततं नौमि ॥
इत्युदाहरणं यथा ।
यस्यांगनामुवेद्या कोकिलनादश्च मलयगिरिपवनः ।
एकैकमस्त्रकृत्यं करोति स जयति मनोजन्मा ॥ १-२

त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ॥ ३

यस्या आर्याया आद्येषु त्रिषु गणेषु पादो विरामो भवति । सा पथ्या नाम । यथा ।
उज्झितनेपथ्यालकमुज्झिततिलकांजनं यदेणाक्ष्याः ।
तस्याः स्मरामि विरहप्रारम्भे वदनमपि रम्यम् ॥ ३

संलंघ्य गणत्रयमादिमं सकलयोर्द्वयोर्भवति पादः ।
यस्यास्तं पिंगलनागो विपुलामिति समाख्याति ॥ ४

यस्या आर्याया आद्यगणत्रयमभिलंघ्य द्वयोरप्यर्धयोः पादो विरामो यतिर्भवति । सा विपुला नाम यथा ।
मम खलु न याति नयनयुगमचलनिर्मेषपिश्यतस्तृप्तिम् ।
त्रस्तमृगशिशुदृशस्तन्वंग्या जघनस्थलीं विपुलाम् ॥

सामान्येन विधानमेतदाद्यंतोभयभेदपूर्वकत्वात्त्रिधा भवति ।
तत्रादिविपुला यथा ।
प्रमदानां जयति कटाक्षोऽयं निशि स्फुरत्स्मरशराभः ।
हृदयस्थितानुरागप्रकटनपटुतां दधात्स्वैरं ॥
अन्त्यविपुला यथा ।
प्रीतिं कस्य न जनयति प्रकुर्वती केशबंधनं नारी ।
दर्शितभुजमूलालंकारसुभूतार्द्रनखपंक्तिः ॥
उभयविपुलोदाहरणं पूर्वमेवोदाहृतमिति । ४

उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।
चपलेति नाम तस्याः प्रकीर्तिता नागराजेन ॥ ५

यस्या आर्याया उभयोरर्धयोर्द्वितीयतुर्यौ द्वितीयचतुर्थौ गुर्वोर्मध्यगौ गमध्यगौ गमध्यगाविति । वदता सूत्रकृता गणनियम उक्तः । तथा हि प्रथमो गणोऽन्तगुरुरेव तृतीयो गणो द्विगुरुरेव पंचमश्चादिगुरुरेवेति निश्चयः । शेषं यथा प्रोक्तम् । सा आर्या चपला नाम यथा ।
चपलाक्षि मौनमुद्रां त्यजेति संभाषिता मया सुतनुः ।
संजातरोमहर्षा बभूवात्युत्सुका तन्वी ॥ ५

आद्यं दलं समस्तं भजेल्लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६

यस्या आर्याया आद्यं दलमर्धं समस्तमपि चपलाया लक्षणं भजेत् । शेषे उत्तरार्धे पूर्वोक्तलक्षणा सा मुखचपला नाम । यथा ।

यस्यात्सिराचितांगी (?) लघुस्तनी पिंगलाक्षियुगला च ।
मुखचपला पुरुषाकृतिरतिदीर्घकृशा परित्याज्या ॥ ६

प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे तु चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ७

या आर्या प्रथमेऽर्धे प्राक्प्रतिपादितं पूर्वमुक्तं लक्षणमाश्रयेत् प्रथमेतरे तु उत्तरार्धे तु चपलाया लक्षणं सा जघनचपला उक्ता विशुद्धधीभिर्निर्मलबुद्धिभिः । यथा । कुंचितलोचनयुगलं समदनमदमोदसुंदरालम् ।
सुरतं स्मरामि तस्या मृगीदृशोः जघनचपलायाः ॥ ७

## ॥ आर्याप्रकरणम् ॥

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतिवान्भुजङ्गेशः ॥ ८

आर्यायाः प्रथमेऽर्धे यदुक्तं लक्षणं तद्यदि द्वयोरप्यर्धयोर्भवति तां गीतिमिति गीतवान् उक्तवान् भुजंगेशः पिंगलनागः । यथा ।
रोमांचं जनयंती सुखयंती नेत्रयोर्युगं यूनाम् ।
सद्यो मनांसि मदयति गीतिः स्त्रीणां मदेन मत्तानाम् ॥ ८

आर्याद्वितीयकेंऽशे यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ९

आर्याद्वितीयेऽर्धे यल्लक्षणमुक्तं तद्यदि द्वयोरप्यर्धयोर्भवति तामुपगीतिमिति पिंगलनागो मुनिर्ब्रूते । यथा ।
शारदचंद्रोद्योते पायंपायं मधु स्वैरम् ।
पौरस्त्रीभिरभीष्टा क्रियते सोत्कण्ठमुपगीतिः ॥ ९

आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ।
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥ १०

यस्या आर्याया उत्तरार्धलक्षणं पूर्वार्धे भवति पूर्वार्धलक्षणमुत्तरार्धे सा उद्गीतिः ।
यथा ।
मण्डपनगरवधूनामुद्गीतिं वत्समल्लारम् ।
आकर्णयति स नूनं दूरादाभ्येति चन्द्रहरिणोऽपि ॥ १०

आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिलं दलं यदीयमुदितैवमार्यागीतिः॥ ११

यद्यार्यायाः पूर्वार्धमुत्तरार्धं च निधनेऽवसाने एकेन गुरुणाधिकेन युक्तं भवति तदाऽऽर्यागीतिर्यथा ।
स्त्रीणां हर्षवतीनां सशिरःकम्पस्तुवन्ति (?) विगतविकल्पाः ।
अप्यार्यागीतिमिमामनेकलयसुन्दरामाकर्ण्य ॥

स्कन्धकमित्यिके । ११

## ॥ गीतिप्रकरणम् ॥

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ १२

सिंहावलोकितन्यायेन 'तृतीययुग्दक्षिणान्तिके'त्यादिसूत्रपठितः पादशब्दोऽत्र दृष्टव्यः । पैंगलीयसूत्रपादशब्दोपादानात् । यथा 'वैतालीयं द्विःस्वराऽयुक्पादेषु सर्वोऽन्तला' इति । यत्र विषमे पादे प्रथमे तृतीये षट्कला मात्रा भवन्ति समे पादे द्वितीये चतुर्थे अष्टौ कला भवन्ति । अन्तेऽवसाने रगणलघू गुरुः च भवतस्तद्वृत्तं वैतालीयं नाम । उत्सर्गेण यथा । क्वचित्प्राये गुरुलघुभावेऽपवादमाह । न समाऽत्र पराश्रिता कलेति । समा द्वितीयचतुर्थादिका पराश्रिता तृतीयपंचमाद्याश्रिता न भवति । समे पादे द्वितीये चतुर्थे निर्गतमंतरं व्यवधानं यासां ता निरन्तरा अंतररहिता लघवो न भवेयुरित्यर्थः । यथा ।
प्रविशत्यनिशं निरर्गला सुपरित्यक्तविभूषणांशुका ।
विरहे तव सा वरांगना वैतालीयमुवाह विभ्रमम् ॥ १२

पर्यन्ते र्यौ तथैव शेषं औपच्छंदसिकं सुधीभिरुक्तम् । १३

षण्णामष्टानां च कलानां पर्यन्तेऽवसाने र्यौ रगणयगणौ भवतः । शेषं पूर्ववत्तदा वैतालीयमेव औपच्छंदसिकं नाम । यथा ।
बहुविप्रियकारकं परोक्षे प्रत्यक्षे प्रियचाटुकारदक्षम् ।
शठवृत्तमिमं द्रुतं वयस्ये औपच्छंदसिकं विमुञ्च कान्तम् ॥ १३

आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत् । १४

'यदा षड्विषमेऽष्टौ समे कला' इत्यादि सर्वं पूर्ववद्भवति । विशेषोक्तौ भगणात्परौ गौ गुरू भवतः तदा वैतालीयमेवापातलिका नाम । यथा ।
नरनाथ भवंतमरीणां नाशकरं प्रसमीक्ष्य पुरस्तात् ।
रिपवो जहति स्म भयार्ता आपातलिकां संगरभूमिम् ॥
आपातलिकां अस्थिरामित्यर्थः ।
उक्तं च पिंगलवृत्तौ भट्टश्रीहलायुधेन । यथा ।
पिंगलकेशा कपिलाक्षी वाचाटा विकटोन्नतदन्ती ।
आपातलिका पुनरेषा नृपतिकुलेऽपि न भाग्यमुपैति ॥ १४

तृतीययुग्दक्षिणांतिका समस्तपादेषु द्वितीयलः । १५

वैतालीयमेव सर्वेष्वपि पादेषु द्वितीयो लघु तृतीयेन सह युक्तो भवति 'न समाऽत्र पराश्रिता कले'ति बाधित्वा तदा दक्षिणान्तिका नाम । यथा ।
ववौ मरुद्दक्षिणान्तिको वियोगिनीनां प्राणहारकः ।
प्रकंपिताशोकचम्पके वसन्त एषोऽनंगबोधकः ॥ १५

उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्र्येण भवेदयुग्मयोः । १६

अयुग्मयोः प्रथमतृतीययोः पादयोः द्वितीयो लघुरग्रिमेन तृतीयेन लघुना सह युज्यते तदा वैतालीयमेवोदीच्यवृत्तिर्नाम यथा ।
गिरं मनोज्ञां पिकांगना मुदिताश्चिक्यत्स्वयमुद्गिरत्यसौ ।
उदीच्यवृत्तौ दिवाकरे सहकारोऽपि तनोति मञ्जरी ॥ १६

पूर्वेण युतोऽथ पंचमः प्राच्यवृत्तिरुदितेति युग्मयोः । १७

लघुरित्यनुवर्तते । समपादयोर्द्वितीयचतुर्थयोः पंचमो लघुः पूर्वेण चतुर्थेन लघुना सह युक्तो यदा स्यात्तदा प्राच्यवृत्तिर्नाम वैतालीयं भवति । यथा ।
स्वगुणैरनुरंजितप्रजः प्राच्यवृत्तपरिपालने रतः ।
रणभूमिषु भीमविक्रमो विंध्यवर्मनृपतिर्जयत्यसौ ॥ १७

यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् । १८

पूर्वोक्तयोरुदीच्यप्राच्यवृत्त्योः समौ सदृशौ ओजयुग्मकौ विषमसमौ पादौ यदा भवतः तदा वैतालीयमेव प्रवृत्तकं स्यात् । यथा ।
प्रवृत्तकान्ते दुःरश्मिभिर्व्याप्तमंबरमिदं विलोक्यताम् ।
गृहाण ताम्बूलमुत्तमं कोपमाशु विजहीहि कोपने ॥ १८

अस्य युग्मरचिताऽपरान्तिका । १९

अस्य प्रवृत्तकस्य समपादकृता समपादलक्षणयुक्तैश्चतुर्भिः पादै रचिता अपरान्तिका नाम । यथा ।
तुंगपीवरघनस्तनालसा चारुकुण्डलवती मृगेक्षणा ।
पूर्वचन्द्रवदनाऽपरान्तिका चित्तमुन्मदयतीयमंगना ॥ १९

अयुग्भवा चारुहासिनी । २०

प्रवृत्तकस्यैव विषमपादलक्षणयुक्तैश्चतुर्भिः पादैः रचिता चारुहासिनी नाम यथा ।
न कस्य चेतः समन्मथं करोति सा सुंदराकृतिः ।
विचित्रवाक्योक्तिपण्डिता विलासिनी चारुहासिनी ॥ २०

## ॥ वैतालीयप्रकरणम् ॥

वक्त्रं नाद्यान्नसौ स्यातामब्धेर्यो अनुष्टुभि ख्यातम् । २१

'पाद' इत्यनुवर्तते । अनुष्टुभ्यष्टाक्षरायां जातौ पादस्य चतुर्थादक्षराद्यो यगणो यदा भवति तदा वक्त्रं नाम वृत्तं ख्यातं कथितम् । अब्धेरिति निर्विशेषणत्वेनाद्यादक्षरान्नगणसगणौ न भवतः । यथा ।
अपाण्डुगण्डमाकर्णविशालनयनं सुभ्रु ।
विरहे चारुसर्वाग्यास्तस्याः स्मराम्यहं वक्त्रम् ॥ २१

युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् । २२

युजोः समपादयोर्चतुर्थादक्षराज्जेन जगणेन परेण वक्त्रमेव पथ्येति कीर्तितम् । यथा ।
त्वद्दन्तिदन्तलग्नोरुशाखाः पथ्यायताः द्रुमाः ।
कथयन्तीव भग्नानां दिग्जयं तव भूपते ॥ २२

ओजयोर्जेन वारिधेस्तदेव विपरीतादि । २३

विपरितपथ्येत्यर्थः । युक्पादे यगण एव कर्तव्यः । यथा ।
विपरीतान्यपि प्रियः कुर्वाणो मुदमाधत्ते ।
अनुकूलस्त्वसौ सदा तेन प्राणाधिको नूनम् ॥ २३

चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः । २४

यद्ययुजोर्विषमयोः पादयोश्चतुर्थादक्षरान्नगणो भवेत् तदा वक्त्रमेव चपला भवति । युक्पादयोर्यगण एव । यथा ।
चपलापांगनयने पक्वबिम्बोष्ठि चन्द्रास्ये ।
स्वाधीनत्वं भज दयितं तारुण्यमस्थिरं यस्मात् ॥ २४

यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता । २५

युक्पादे द्वितीयचतुर्थे लघुः सप्तमो यस्याः सा युग्मविपुला नाम । ननु पथ्यालक्षणसाम्यात्पुनरुक्तमेतत् । नैवम् । विपुलाधिकारस्येदानीमारभ्यमानत्वात् विनाऽनुत्पत्तिः पथ्यालक्षणं त्वयुक्पादे अवश्यमेव यगणेन भवितव्यम् । अत्र तु न नियमः । यथा ।
अहो कस्यापि धन्यस्य महाकुलप्रसूतया ।
प्रीतिः स्वकान्तया सार्धं विपुला जायते गृहे ॥ २५

सैतवस्याखिलेष्वपि । २६

सैतवस्याचार्यस्य मतेन चतुर्ष्वपि पादेषु सप्तमो लघुः कर्तव्यः । यथा ।
अहो धन्यस्य कस्यचित्सुकवेर्जायते मतिः ।
नूनं ययाधिक्रियते सैतवं काव्यमुत्तमम् ॥ २६

भेनाब्धितो भाद्विपुला । २७

सैतवस्येति निवृत्तम् । 'चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशे'रित्यनुवर्तते । 'यस्यां लः सप्तमो युग्मे सा युग्मविपुला मते'ति सर्वमनुवर्तनीयम् । अयुक्पादयोः प्रथमतृतीययोश्चतुर्थ्यादक्षरात्परयो यगणं बाधित्वा भगणश्चेद्भवति तदा भेनोपलक्षिता विपुला स्यात् भविपुलेत्यर्थः । यथा ।
विशालाक्षी कामगजकुम्भाम्भविपुलस्तनी ।
मध्यक्षामा हंसगतिः कस्य न स्याद्गतिप्रदा ॥

अयुजोरिति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम् व्यक्तिपक्षे पुनरेकस्य । एकपक्षे पुनः प्रथमस्य तृतीयस्य वा तथा चाहुर्महाकवयः ।
'वटे वटे वैश्रवणश्चत्वरे चत्वरे शिव' इति ।
'यस्य प्रभाद्भुवनं शाश्वते पथि तिष्ठती'ति ।
'उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता' इति महाकविप्रयोगाः । २७

इत्थमन्या रश्चतुर्थात् । २८

इत्थं पूर्वोक्तप्रकारेणायुक्पादयोश्चतुर्थादक्षरात्परतो रगणो भवति तदा रविपुला स्यात् । यथा ।
तथा जितः शत्रुवर्गो राजन् बाहुबलेन ते ।
सहान्तःपुरो यथाऽसौ ततार विपुला नदी ॥
व्यक्तिपक्षे प्रथमपादे यथा ।
[महाकविकालिदासवस्वाग्देवतागुरुम् ।
यज्ज्ञाने विषयाभ्यान्ति दर्पणे प्रतिबिम्बवत् ।]
तृतीयपादे यथा ।
कामिनीभिः सह प्रीतिः कस्य नाम न रोचते ।
यदि न स्याद्वारिवीचिचंचलं हत जीवितम् ॥ इति । २८

नोऽम्बुधेश्चेन्नविपुला । २९

अयुक्पादयोश्चतुर्थादक्षराच्चेन्नगणो भवतीति तदा नविपुला स्यात् ।
लीलया येन विपुला दंष्ट्राग्रेणोद्धृता मही ।
बिभ्रता सौकरमपि वपुर्वन्दामि तं हरिम् ॥
अत्रैव भारविकविर्यथा ।
युयुत्सुनेव कवचं किमामुक्तमिदं त्वया ।
तपस्विनो हि वसते केवलाजिनवल्कले ॥
व्यक्तिपक्षे प्रथमपादे यथा ।
तव मंत्रकृतो मंत्रैर्दूरात्संशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ इत्यादि ॥ २९

तोऽम्बुधेस्तत्पूर्वा भवेत् । ३०

अयुक्पादयोः चतुर्थादक्षराच्चेत्तगणो भवति तदा तत्पूर्वं तविपुलेत्यर्थः । यथा ।
तृष्णेयं रे तात श्रियं संचितां विपुलां हरे –
द्विहाय तस्मात्तां भव सुखी वैराग्यसम्पदा ॥
व्यक्तिपक्षे प्रथमपादे यथा ।
लोकवत्प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः ।
लोकव्यवहारं प्रति सदृशौ बालपण्डितौ ॥

अन्येति ग्रहणात् मगणसगणविपुलाऽपि बोद्धव्या । यथा ममैव छन्दसि ।
'अम्बुधौ नतभरमसा ओजे तद्युतविपुला भवेत्' । यथा ।
सर्वातिरिक्तं सौभाग्यं बिभ्रती चारुलोचना ।
स्त्रीलोकसृष्टिः सौम्येव निः साम्यमस्य वेधसा ॥ (?)
व्यक्तिपक्षे प्रथमपादे यथा ।
मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ॥ इति ।
तृतीयपादे यथा ।

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यदिति ॥
सविपुला यथा ।
क्षणविध्वंसिनि काये का चिन्ता मरणे रणे । इति ।
सर्वेषां विपुलाभेदानां चतुर्थो वर्णः प्रायेण गुरुर्भवति । इत्याम्नायः ॥ ३०

## ॥ इति वक्त्रप्रकरणम् ॥

द्विकगुणितवसुलघुरचलधृतिरिति । ३१

द्वाभ्यां गुणिता वसवो अष्टौ लघव इत्यर्थः । षोडशभिर्लघुभिरचलधृतिर्नाम । यथा ।
इतरजनहितमितरमृतरमतिमनवरतमवनितिलकमिव सपदि ।
स्वयमपि जलनिधिजननिरतिलषति पुरुषवरमचलधृतिविभविनमिह ॥
गीत्यार्येति पिंगलः । ३१

मात्रासमकं नवमो ल्गन्तं । ३२

'द्विकगुणितवसुलघु'रित्यनुवर्तते । यदा अचलधृतिरेव गुर्वन्तो भवति नवमोश्च लघुरेव तदा मात्रासमकं नाम ।
प्राक्सूत्राल्लघुरित्यनुवर्तमानेऽपि 'नवमो लि'ति वदता सूत्रकारेणान्येषां लघु वोऽनुज्ञातस्तस्मा'न्न समाऽत्र पराश्रिता कले'त्यप्यनुवर्तनीयम् ।
अत्रैव सूत्रे लक्ष्यलक्षणत्वात् । यथा ।
धूलीधूसंस्कृततनशोभः प्रकटितनूतनवदनद्वंद्वः ।
प्रमुदितवदनो जटिलशिरस्कः खेलति मात्रासमकं बालः ॥ ३२

जो न्लावथाम्बुधेर्विश्लोकः । ३३

अम्बुधेर्लघुचतुष्टयात्परयोर्जगणो न्लौ नगणलघू यदा भवतस्तदा मात्रासमकमेव विश्लोको नाम । यथा ।
मुञ्चति तृणमिव गतविकल्पः पुत्रं प्रियमविश्लोकं यतः ।
संग्रामभुवि विजितारिसमूहः क्षोणीमिमां स साक्षदव्यात् (?) ॥ ३३

तद्युगलाद्वानवासिका स्यात् । ३४

तद्युगलादम्बुधियुगलाल्लघ्वष्टकात्परयो जगणो नगणलघू यदा भवतस्तदा वानवासिका भवेत् । यथा ।
कुंकुमपंकानुलिप्तगात्रा मध्यक्षामा विपुलनितम्बा ।
अस्माकं वानवासिका स्त्री चेतःप्रीतिं सपदि विधत्ते ॥ ३४

बाणाष्टनवसु यदि लश्चित्रा । ३५

पंचमोऽष्टमो नवमो यदि चेल्लघुर्भवति तदा चित्रा नाम यथा ।
दृष्ट्वा तव रिपुनगरे शून्ये चित्रानि धवलगृहभित्तीनाम् ।
यान्ति द्रुततरमिभयूथातित्रासम् नरवरजनता बुद्ध्या ॥ ३५

अष्टाभ्योऽथ गलावुपचित्रा । ३६

लघ्वष्टकाद्यदा गुरुलघू भवतस्तदा उपचित्रा नाम । यथा ।
मानं मानिनि मुञ्च भज त्वं कान्तं यावदितीरितमाल्या ।
तावद्व्योम बभूव पुरस्तान्नक्षत्रैरुपचित्रितमेतत् ॥ ३६

यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमकादिपादैः कलितम् ।
अनियतवृत्तपरिमाणसहितं प्रथितं जगत्सु पादाकुलकम् ॥ ३७

अतीतं प्रागुक्तं कृतं लक्ष्म लक्षणं येन तेन युतैः सहितैः मात्रासमकविश्लोकवानवासिकाचित्रोपचित्राणां पादैश्चरणैः कलितं युक्तं अनियतवृत्तपरिमाणसहितं अनियतममर्यादं वृत्तानां परिमाणं तेन सहितम् । कोऽर्थः । मात्रासमकादीनां पञ्चानामपि पादैर्यैः कैश्चिदपि चतुर्भिः पादाकुलकमिति कथितम् ।
अत्र मात्रासमकविश्लोकवानवासिकाचित्रोपचित्राणामुदाहरणम् । यथा ।
दक्षिणमारुतचलिताशोके कोकिलकलरवमुदितालोके ।
मुग्धे मन्मथसुहृदवसन्ते पादाकुलकं याति पतिस्ते ॥
तथा विश्लोकोपचित्रादिपादैर्यथा ।
वाताहतदलपङ्कजनेत्रे असितदुकूलाच्छादितगात्रे ।
कथय सखि त्वं क्व नु मे व्यक्तं पादाकुलकं गच्छसि नक्तम् ॥
एवमन्येऽपि महाकविप्रयोगा यथा ।
चत्वरमण्डपतरुमूलानि संचितसलिलान्यवकूलानि ।
क्वचिदपि न भवति भिक्षाहानिः तत्किं क्रियते मानम्लानिः ॥
अन्ते यमक इत्याम्नायः । ३७

अधुना गुरुलघुप्रमाणमाह ।
वृत्तस्य लो विना वर्णैर्गा वर्णा गुरुभिस्तथा ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ ३८

यस्य कस्यचिद्वृत्तस्य लः कला मात्रा वर्णैरक्षरैर्विना गुरवो भवन्ति । वर्णा गुरुभिस्तथा ताः कला गुरुभिर्विना वर्णा न भवन्ति । गुरवो लैर्दलै नित्यं ता एव कला लैर्लघुभिर्विना दलेऽर्धे कृते सति गुरवो भवन्ति । यथा । अस्मिन्नेव वृत्ते एकपंचाशत्कलावर्णैः द्वात्रिंशद्भिर्विना एकोनविंशतिगुरवोः भवन्ति । पुनस्ता एव मात्रा एकोनविंशत्या गुरुभिर्विना द्वात्रिंशद्भवन्ति । पुनस्ता कला एकपंचाशत्त्रयोदशभिर्लघुभिर्विना अष्टत्रिंशद्भवन्ति । ततो दलेऽर्धे कृते सति एकोनविंशतिर्गुरवो भवन्तीति प्रमाणं नियतं वृत्तस्येति । ३८

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ।
सगुरुशकलयुगलकमपि सुपरिघटितललितपदनिचिति भवति शिखा ॥ ३९

शिखिभिस्त्रिभिर्गुणितैर्दशभिर्लघुभी रचितं कृतं तच्च तदपगतलघुयुगलं च तथोक्तं अष्टाविंशल्लघुकमित्यर्थः । अपरं द्वितीयमिदमर्धमखिलं संपूर्णं त्रिंशल्लघुकमित्यर्थः । शकलयुगलकमपि अर्धद्वयममपि सगुरु सह गुरुणा वर्ततेति सगुरु यदा भवति तदा शिखा नाम भवति । सुपरिघटितानि ललितपदानि तेषां निचिती रचनाविशेषा यत्र क्रियाविशेषणे तत्तथोक्तम् । यथा ।
मलयपवनचलितसुविकचविचिकलमलिरधिवसति मुदितमनाः ।
शुभितसमयमुदितपिकयुवतिरपि परिमलबहुलबकुलतरुशिखा ॥
चूलिकेति वक्तव्ये । छंदोभंगभयाच्छिखेत्युक्तमेकार्थत्वान्न दोषः । ३९

विनिमयविहितशकलयुगललघुललितपदविततिरचितगणनिचया ।
श्रुतिसुखकृदियमपि जगति जशिर उपगतवति त्रि सति भवति खजा ॥ ४०

सैव शिखा विनिमयेन व्यत्यासेन विहितं शकलयुगलमर्धद्वयं ललितपदवितत्या रचितगणनिचया यदा भवति तदा खजा नाम । क्व सति । त्रि सति । त्रि चवर्गीयपंचमस्य चवर्गीयतृतीयस्य शिर उर्ध्वविभागस्तस्मिन्नुपगतवति । कोऽर्थः । खञ्जेत्यर्थः । यथा ।
ससलिलसलिलधरवसुमुदितशिखिकुलविरचितकलकलनिकरे ।
सुपरिहृतनिजयुवतिगृहनभसि हत पथिक कथमसि गमा ॥
एकगुरूणि छंदसि खञ्जाशब्दस्य प्रवेशयितुमशक्यत्वान्नाम नोक्तम् । ४१

अष्टावर्धे गा द्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता ।
दलमपपरमपि वसुगुणितसलिलनिधिलघुकविरचितपदवितति भवति । ४१

द्वाभ्यां गुणिताऽष्टौ गुरवो यस्याः सा षोडशगुरुः प्रथमेऽर्धे त्वपरमप्यर्धं वसुभिरष्टभिर्गुणिताः सलिलनिधिलघव इति द्वात्रिंशत्संख्या लैः रचितपदविततिः अनंगक्रीडा नाम ।
त्यक्तानङ्गक्रीडां मुक्तव्रीडां शत्रुक्षौणीपालाः ।
सुविषमवनभुवि विदधति भयमिव नरवरतिलकसुविजितरिपुनिवहाऽसौ ॥
सौम्येत्येके । ४१

त्रिगुणनवलघुरवसितिगुरुरिति दलयुगलकृततनुरतिरुचिरा । ४२

त्रिभिर्गुणितार्नव लघवो यस्यां सा तथोक्ता सप्ताविंशल्लघुरित्यर्थः । अवसितिरवसानं तस्मिन् गुरुर्यस्याः सा तथोक्ता इति पूर्वोक्तप्रकारेण सप्तविंशल्लघवोऽन्ते गुरुः एवं दलयुगलकृततनुः विरचितशरीरा अतिरुचिरा नाम । यथा ।
समदगजगतिरुरुकुचयुगकृतनततनुरमलवदनकमला ।
अनवरतमपहरति मम हृदयमिह हि युवतिरियमतिरुचिरा ॥ ४२

## ॥ इति मात्रासमकप्रकरणम् ॥

इति सुल्हणविरचितायां सुकविहृदयानन्दिन्याभिधानायां वृत्तरत्नाकरच्छंदोवृत्तौ मात्रावृत्ताध्यायो द्वितीयः समाप्तः ॥

# तृतीयोऽध्यायः समवृत्ताध्यायः

### उक्तायाम्

श्रीः । १

एकाक्षरायां जातौ एको गुरुर्यस्य वृत्तस्य पादे तद्वृत्तं श्रीर्नाम । यथा ।
श्रीस्तत्तैलम् । १

### अत्युक्तायाम्

गौ स्त्री । २

गुरुद्वयं यत्र तद्वृत्तं स्त्री नाम । यथा ।
आद्या सा स्त्री गौरी पायात् । २

### मध्यायाम्

मो नारी । ३

यत्र मगणस्तद्वृत्तं नारी नाम ।
श्रीनारीगोविंदौ भूयास्तवोद्बुद्ध्यै । ३

रो मृगी । ४

यत्र रगणस्तद्वृत्तं मृगी नाम । यथा ।
कथ्यतां यात्यसौ
गीतगा हा मृगी ॥ ४

### प्रतिष्ठायाम्

म्गौ चेत्कन्या । ५

चेद्यदि पादे मगणगुरू भवतः तद्वृत्तं कन्या नाम । यथा ।
कामक्रीडारूढायासा ।
एताः कन्या कीदृश्यास्ताः ॥
तथा च ।
सर्वेषां यः सामान्यर्द्धिः ।
तस्येशस्स्ताद्भूयो वृद्ध्यै ॥ ५

### सुप्रतिष्ठायाम्

भ्गौ गिति पंक्तिः । ६

यत्र भगणो द्वौ गुरू भवतः तद्वृत्तं पंक्तिर्नाम भवति । यथा ।
व्योमनि नीलां नीरदपंक्तिम् ।
वीक्ष्य विपन्नाः प्रोषितवध्वः ॥ ६

### गायत्र्याम्

त्यौ स्तस्तनुमध्या । ७

यत्र तगणयगणौ भवतः तद्वृत्तं तनुमध्या नाम । यथा ।
कस्यापि महद्भिः पुण्यैरनुकूला ।
श्यामा तनुमध्या गेहे भवति स्त्री ॥ ७

शशिवदना न्यौ । ८

यत्र नगणयगणौ भवतस्तद्वृत्तं शशिवदना नाम । यथा ।
मलयजलेपः कुवलयशय्या ।
दहति वियोगे शशिवदनायाः ॥ ८

त्सौ चेद्वसुमती । ९

चेत्तगणसगणौ पादे भवतः तद्वृत्तं वसुमती नाम । यथा ।
पृथ्वी धृतवती राज्ञा नयवता ।
मुद्यज्जनपदा श्लाघ्या वसुमती ॥ ९

## उष्णिहि

मधुमतिननगाः । १०

नगणनगणगुरवो यत्र तद्वृत्तं मधुमती नाम । यथा । १०

म्सौ गः स्यान्मदलेखा । ११

मगणसगणौ गुरुश्च यत्र तद्वृत्तं मदनलेखा नाम । यथा ।
लावण्याम्भसि मग्ने तस्याः काममहेभे ।
भ्रष्टेयं स्तनकुम्भाद्रोमलीमदलेखा ॥ ११

कुमारललिता ज्सौग् । १२

जगणसगणौ गुरुश्च यत्र तद्वृत्तं कुमारललिता नाम । यथा ।
कुमारललितानि प्रमोदजननानि ।
नयाभिमुदमग्र्यां विलोक्य नमनीका ॥ (?) १२

सरगा हंसमाला । १३

यत्र सगणरगणगुरवस्तद्वृत्तं हंसमाला नाम । यथा ।
शरदि प्रेक्ष्य यान्तीं मुदितां हंसमालाम् ।
त्यजति प्रेयसीं कः सुखलिप्सुः स्वतन्त्रः ॥ १३

## अनुष्टुभि

मो मो गो गो विद्युन्माला । १४

द्वौ मगणौ द्वौ गुरू च यत्र तद्वृत्तं विद्युन्माला नाम । यथा ।
चतुर्भिर्यतिः । यथा ममैव छंदसि ।
मौ गौ वेदैर्विद्युन्माला ।
व्योम्नि व्याप्ते तप्तरेखानाकुर्वन्ती वंग्यांमानम्रां त्वां भर्तुः स्त्रीणां जागर्यका विद्युन्माला ॥ (??) १४

भौ गिति चित्रपदा गः । १५

भगणद्वयं गुरू च यत्र तद्वृत्तं चित्रपदा नाम । यथा ।

नूपुरशब्दमनोज्ञं काललयान्वितगीतम् ।
पीनपयोधरयुग्मा नृत्यति विचित्रपदेयम् ॥ १५

माणवकं भात्तलगाः । १६

भगणतगणलघुगुरवो यत्र तद्वृत्तं माणवकं नाम । यथा ।
वाञ्छसि शं चेद्विपुलं तर्हि सखे मुञ्च शठ –
मेधा किं ज्ञास्य रुचिं मित्रमपि त्वचपलम् ॥ (?)
चतुर्भिर्यतिरित्याम्नायः । माणवकाक्रीडितमिति पिंगलः । १६

म्नौ गौ हंसरुतमेतत् । १७

यत्र मगणनगणौ द्वौ गुरू तद्वृत्तं हंसरुतं नाम । यथा ।
दृष्ट्वा कासकुसुमानि श्रुत्वा हंसरुतमेतत् ।
कामार्तः शरदि पान्थ कष्टं जीवति निकृष्टः ॥ १७

जौ समानिका गलौ च । १८

रगणजगणौ गुरुलघू च यत्र तद्वृत्तं समानिका नाम । यथा ।
ते समानिका च यान्ति शत्रवो भयेन धीर ।
राजसंपदं विहाय यद्यजेयबाहवोऽपि ॥ १८

प्रमाणिका जरौ लगौ । १९

जगणरगणौ लघुगुरू यत्र तद्वृत्तं प्रमाणिका नाम । यथा ।
प्रवाति दक्षिणानिलः सुपुष्पिताम्रकिंशुकः ।
वसंत एष सांप्रतं प्रमाणिकाऽत्र कोकिला ॥ १९

[चम्पकमाला चेद्भमसा गः । २०

भगणमगणसगणाः गुरुश्च यत्र तद्वृत्तं चंपकमाला नाम ।] २०

[ नाराचकं तरौ लगौ । २१

तगणरगणौ लघुगुरू च यत्र तद्वृत्तं नाराचकं नाम । यथा । ] २१

वितानमाभ्यां यदन्यत् । २२

आभ्यां समानिकाप्रमाणिकाभ्यां यदन्यदष्टाक्षरं छन्दस्तद्वितानं नाम । आभ्यां यदन्यदिति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारत्वं दर्शयति । अन्यथा गणनियमं ब्रूयात् । यथा ।
ज्योत्स्नावितानमैन्दवं पश्य प्रिये मनोरमम् ।
कोपं त्यज प्रियं भज स्त्रीणां प्रियं हि यौवनम् ॥
अन्यच्च ।
तस्याः स्मरामि सुंदरं चन्द्रोपमानमाननम् ।
कंदर्पचापभंगुरं श्रुतिभ्रमोपशोभितमिति ॥
अपि च ।
कंकालमालधारणं कंदर्पदर्पहारिणम् ।
संसारबन्धमोचनं वंदामहे त्रिलोचनम् ॥

'अन्यदतो हि वितानमि'ति श्वेतपटजयदेवेन यदुक्तम् ।
इत्यनेन गतार्थत्वात् । २२

## बृहत्याम्

रान्नसाविह हलमुखी । २३

यत्र रगणनगणसगणास्तद्वृत्तं हलमुखी नाम । यथा ।
निंदितां वपुषि पुरुषद्वेषिणीं विरदशनाम् ।
तां सखे परिणयविधौ दूरतस्त्यज हलमुखीम् ॥ २३

भुजगशिशुभृता नौ मः । २४

द्वौ नगणौ मगणश्च यत्र तद्वृत्तं भुजगशिशुभृता नाम । सप्तभिर्यतिरित्याम्नायः । यथा ।
वरतरुलवलीवल्लीकिसलयगहनछिन्नाः ।
भुजगशिशुभृता रम्या मलयगिरिवनोद्देशाः ॥ २४

## पंक्तौ

म्सौ ज्गौ शुद्धविराडिदं मतम् । २५

मगणसगणजगणा गुरुश्च यत्र तद्वृत्तं शुद्धविराट् नाम । यथा ।
कुर्वन् राज्यमपीह संततं कामक्रोधविवर्जितः सदा ।
मित्रो मे न समोभयानतः(?) सत्यं शुद्धविराडसि प्रभो ॥ २५

म्नौ य्गौ चेति पणव नामेदम् । २६

यत्र मगणनगणयगणा गुरुश्च यत्र तद्वृत्तं पणव नाम । पञ्चभिर्यतिः । यथा ।
यासां वक्ष्यसि घनवक्षोजे हारः संप्रति शुशुभे तारः ।
पादौ नूपुररववाचालौ भ्रातस्ताः पणवनिताः पश्य ॥ २६

ज्रौ रगौ मयूरसारिणी स्यात् । २७

रगणजगणरगणा गुरुश्च यत्र तद्वृत्तं मयूरसारिणी नाम । यथा ।
विस्तारेण बर्हिभाररम्या बर्हिणी मयूरसारणीयम् ।
गर्जितं निशम्य वारिदानां नृत्यति प्रमोदनिर्भराङ्गी ॥ २७

भ्मौ सगयुक्तौ रुक्मवतीयम् । २८

भगणमगणसगणा गुरुश्च यत्र तद्वृत्तं रुक्मवती नाम । यथा ।
चेतसि यस्या जीवितनाथस्तत्प्रियकार्यासक्तमनस्का ।
देवगुरुश्वश्रूद्विजभक्ता रुक्मवती स्यात्कीर्तिमती वा ॥ २८

ज्ञेया मत्ता मभसगयुक्ता । २९

मगणभगणसगणगुरवो यत्र तद्वृत्तं मत्ता नाम । चतुर्भिर्यतिरित्याम्नायः । यथा ।
यच्चूताग्रे स्मरशरबंधौ बद्धावासा पिकसहवयः ।
गायन्त्येताः कलमिति मत्तास्तन्मध्येऽहं सखि मधुरेषः ॥ २९

नरजगैर्भवेन्मनोरमा । ३०

यत्र नगणरगणजगणगुरवो तद्वृत्तं मनोरमा नाम । यथा ।
युवतिरिंदुसुंदरानना पृथुघनस्तनी कृशोदरी ।
गुरुनितम्बभारमंथरा हरति मे मनो मनोरमा ॥ ३०

## त्रिष्टुभि

त्जौ जो गुरुणेयमुपस्थिता । ३१

तगणजगणौ जगणो गुरुश्च तद्वृत्तं उपस्थिता नाम । अत्र द्वाभ्यामष्टभिश्च यतिरित्येके । यथा ।
त्यक्त्वा निजशस्त्रमुपस्थिता ये प्रांजलयस्तव शत्रवः ।
तेषामवनीश्वर जीवितं दत्तं भवता समराजिरे ॥ ३१ स्यादिन्द्रवज्रा यदि तौ जगौ गः । ३२

यत्र तगणौ द्वौ जगणो गुरू च तद्वृत्तं इन्द्रवज्रा नाम । यथा ।
स्यादिन्द्रवज्रादि कर्कशं मे
चेतो यदीये विरहागमेऽस्मिन् ।
नूनं तदानीं यदि तद्वियोग-
संतापसंयत्सहनक्षमः स्याम् ॥ ३२

उपेन्द्रवज्रा जतजास्ततो गौ । ३३

यत्र जगणतगणजगणा द्वौ गुरू च तद्वृत्तं उपेन्द्रवज्रा नाम । यथा ।
उपेन्द्रवज्रादि महाभिघाता
प्रयान्ति नाशं स्मरतो नरस्य ।
अहर्निशं त्वां विजितामरेश
श्रीकृष्ण विष्णोर्गुरु मे प्रसादम् ॥ ३३

अनंतरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।
इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ॥ ३४

न विद्यन्तेऽन्तरं व्यवधानं यस्य तदनंतरं उदीरितमुक्तं लक्ष्म लक्षणम् । भजत इति यस्याः पादौ तावनंतरोदीरितभाजौ इन्द्रवज्रोपेन्द्रवज्रयोरित्यर्थः । इत्थममुना प्रकारेणान्यास्वपि उक्ताप्रभृतिषु जातिषु मिश्रितास्विदमेवोपजातिं नाम स्मरन्ति वदन्ति छंदोविदः । यथा ।
विहाय पंकेरुहकाननानि स्फारस्फुरत्केतकमभ्युपास्य ।
मेघागमेऽस्मिन्नुपजातिसर्वे भ्रमन्त्यमी षट्चरणा रणंतः ॥
एवमन्यान्यप्युदाहरणानि कुमारसम्भवादिमहाकाव्येषु दृष्टव्यानि ।

समवृत्ताध्यायेऽपि प्रसंगादुपजातीनां पाठा लाघवार्थः । एषां प्रस्तारवशाच्चतुर्दशप्रकारा भवन्ति । ते च लेखकेन पूर्वपत्रे रचिताः । अत्र प्रथमगणकृत एव विशेषः । जत एव प्रस्तार्यन्तो । यथा ।

[१४ उपजातीनां मात्राविन्यासाः दत्ताः।]

सान्द्रपदं भ्तौ नगगुरुभिश्च । ३५
भगणतगणनगणा द्वौ गुरू तत्र तद्वृत्तं सान्द्रपदं नाम । यथा । ३५

नजजलगैर्गदिता सुमुखी । ३६
नगणजगणजगणा लघुगुरू च यत्र तद्वृत्तं सुमुखी नाम । पंचभिर्यतिरित्याम्नायः । यथा ।
सुतजननी सुकुलप्रभवा
मृदुवचना सुरते चतुरा ।
भवति गृहे विपुलैः सुकृतैः
मृगनयना युवतिः सुमुखी ॥ ३६

दोधकवृत्तमिदं भभभाद्गौ । ३७

यत्र भगणत्रयं द्वौ गुरू च तद्वृत्तं दोधकं नाम । यथा ।
यस्य नरस्य भवेदिह साक्षाद्वृत्तमदोधकयोरपि तुल्यम् ।
तेन समं कथमर्थवतापि प्रेमकथां कथयामि वयस्ये ॥ ३७

शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः । ३८

यत्र मगणतगणतगणा द्वौ गुरू च तद्वृत्तं शालिनी नाम । चतुर्भिः सप्तभिर्यतिरित्याम्नायः । यथा ।
नो जानीते शालिनी वारायार्यप्रायेणेह स्तादभेदं मनुष्यः ।
सोऽपि प्रेम प्राप्य देवीप्रियायाः धुर्यात्मानं वेत्ति वैदग्धभाजाम् ॥ ३८

वातोर्मीयं गदिता म्भौ तगौ गः । ३९

मगणभगणतगणा गुरुद्वयं यत्र तद्वृत्तं वातोर्मी नाम । अत्र वक्ष्यमाणसूत्रे च विशेषानभिधानात्प्रागुक्तैव यतिर्यथा ।
बलाद्वातोर्मय एते सनक्राः सामुद्राणां सलिलानां समूहाः ।
आब्रह्मादीनपि संहृत्य लोकान् येषामन्तः सुखशायी मुरारिः ॥ ३९

म्भौ न्लौ गः स्याद्भ्रमरविलसितम् । ४०

मगणभगणनगणा लघुगुरू च यत्र तद्वृत्तं भ्रमरविलसितं नाम ।
प्राच्येव यतिर्यथा ।
त्यक्त्वा मानं चरणविपतितस्तन्मन्येऽहं प्रिय सखि नियतम् ।
त्वद्वक्त्राब्जभ्रमरविलसितं कर्तुं वांछत्ययमिह दयितः ॥ ४०

पञ्चरसैश्रीर्भतनगगैः स्यात् । ४१

भगणतगणनगणा द्वौ गुरू च यत्र तद्वृत्तं श्रीः नाम । पंचभिः षड्भिर्यतिर्यथा ।
द्रव्यविमोहाज्जलनिधियानं संगरभूमौ त्यजति च देहम् ।
कृत्यमकृत्यं गणयति नैव श्रीरसलुब्धो ध्रुवमिह जन्तुः ॥ ४१
कुड्मलदंतीत्येके ।

रो नराविह रथोद्धता लगौ । ४२

यत्र रगणनगणरगणा लघुगुरू च तद्वृत्तं रथोद्धता नाम । यथा ।
लग्न एव पदयोरथोद्धतान्यायताक्षिवचनानि संवृणु ।
सत्रवाभिरिति या प्रबोधिता तां स्मरामि निजजीवितौषधिम् ॥ ४२

स्वागतेति रनभाद्गुरुयुग्मम् । ४३

यस्य पादे रगणनगणभगणा गुरू च तद्वृत्तं स्वागता नाम । यथा ।
सर्वलोकसुखदास्वपि वर्षास्वागतासु न सुखी रिपुवर्गः ।
विन्ध्यवर्मनृपते तव खड्गभ्रान्तिभाजमचिरामभिवीक्ष्य ॥ ४३

ननसगगुरुरचिता वृन्ता । ४४

द्वौ नगणौ सगणो गुरुद्वयं यस्य पादे तद्वृत्तं वृन्ता नाम । अत्र मण्डूकप्लुतन्यायेन शालिन्युक्तेति सूत्रादब्धिलोकैरिति पदमनुवर्तते । तेन हि चतुर्भिर्यतिः । यथा ।
मधुकरचरणभराक्रान्तं पथ तदिह कुसुममिदं वृन्तात् ।
कथयति विषयवियुक्तानां विधिपरिणतिमिव लोकानाम् ॥ ४४

ननरलगुरुभिश्च भद्रिका । ४५

द्वौ नगणौ रगणो लघुगुरू च यत्र तद्वृत्तं भद्रिका नाम । यथा ।
विविधपरकथाप्रगल्भवागतिविरलविसंस्थुलद्विजा ।
कपिलचिकुरसंचया कृशा न भवति वनिता प्रभद्रिका ॥ ४५

श्येनिका रजौ रलौ गुरुर्यदा । ४६

रगनजगणरगणा लघुगुरू च यत्र तद्वृत्तं श्येनिका नाम । यथा ।
श्येनिकाशृगालसंकुले रणे विंध्यवर्मदेव ये त्वया हताः ।
शत्रवस्त एव तारकाश्रयं तन्वते विमानगाः सुरावृताः ॥ ४६

उपस्थितमिदं ज्सौ ताद्गकारौ । ४७

जगणसगणतगणा द्वौ गुरू च यत्र तद्वृत्तं उपस्थितं नाम । यथा ।
उपस्थितमनेकाश्चेतकी चुलुक्यनृपतेः सैन्यं विशालम् ।
अवन्तिप्रिय निहित्वा न कोऽपि ध्रुवं क्षितितले जेतुं समर्थः ॥ ४७

शिखण्डितमिदं ज्सौ त्गौ गुरुश्चेत् । ४८

जगणसगणौ तगणगुरू गुरुश्चेत्तद्वृत्तं शिखण्डितं नाम । यथा । ४८

मौक्तिकमाला भवेद्भभ्तलगाः । ४९
भगणभगणतगणलघुगुरवो यत्र भवेत्तद्वृत्तं मौक्तिकमाला नाम । यथा । ४९

## जगत्याम् ।

चन्द्रवर्त्म गदितं तु रनभसैः । ५०

यत्र रगणनगणभगणसगणा भवन्ति तद्वृत्तं चन्द्रवर्त्म गदितम् । यथा ।
चक्षुषी परिविमृश्य करयुगात् क्रान्तहर्यपरिशोभितवदना ।
चन्द्रवर्त्म कथयेत्यतिविवशा कांतमेवमवदन्निशि वनिता ॥ ५०

जतौ तु वंशस्थमुदीरितं जरौ । ५१

यत्र जगणतगणजगणरगणास्तद्वृत्तं वंशस्थं नाम । यथा ।
स्ववेश्मवंशस्थमुदीक्ष्य वायसं प्रियागमासंशिनमुत्तमैंगितैः ।
जगाद काचिन्मुदिता समागते प्रिये प्रदास्यामि तवेप्सितं खग ॥ ५१

स्यादिन्द्रवंशा ततजैः रसंयुतैः । ५२

यत्र द्वौ तगणौ जगणरगणौ तद्वृत्तं इन्द्रवंशा नाम यथा ।
आदीन्द्रवंशाद्दिवमस्तभूरुहप्रच्छादितानेकगुहा गृहोऽपि सन् ।
धाराधिनाथस्य भयेन विद्रुतान् भूगोप्तुरिष्टान्न भवामि नेश्वरः ॥ ५२

इह तोटकमम्बुधिसैः प्रथितम् । ५३

यत्र चत्वारि सगणास्तद्वृत्तं तोटकं नाम । यथा ।
त्यज मानममानमनंतगुणं कुरु वाक्यमिदं परिणामहितम् ।
त्वयि तोटकजायतनेत्रयुगे त्वरितं दयितांतिकमिन्दुमुखि ॥ ५३

द्रुतविलम्बितमाह नभौ भरौ । ५४

नगणभगणौ भगणरगणौ यत्र तद्वृत्तं द्रुतविलम्बितं नाम । यथा ।
द्रुतविलम्बितगेन तवारिणा क्वचिदपि स्थिरभावमविन्दता ।
गुरुनितम्बभरालसगामिनी प्रतिपदं स्ववधूर्नृप निन्द्यते ॥ ५४

वसुयुगविरतिर्नौ म्यौ पुटोऽयम् । ५५

द्वौ नगणौ मगणयगणौ यत्र तद्वृत्तं पुटो नाम । वसुभिरष्टभिर्युगैश्चतुर्भिर्यतिः ।
अपि चरणनतोऽहं तत्प्रसीद त्यज सरसिजनेत्रे मौनमुद्राम् ।
वचनममृतकल्पं श्रोतुकामा श्रवणपुटनिपेयं सर्वदा ते ॥ ५५

प्रमुदितवदना भवेन्नौ ररौ । ५६

द्वौ नगणौ द्वौ रगणौ यत्र तद्वृत्तं प्रमुदितवदना नाम । यथा ।
गुरुकुचयुगलां विशालक्षणां विकटकटितटां मनोज्ञां सदा ।
विविधसुरतिकेलिदक्षामहं प्रमुदितवदनां स्मरामि प्रियाम् ॥ ५६

चतुर्जगणं वद मौक्तिकदाम । ५७

नयसहितौ न्यौ कुसुमविचित्रा । ५८

नगणयगणौ पुनर्नगणयगणौ यत्र तद्वृत्तं कुसुमविचित्रा नाम । षड्भिर्यतिरित्युपदेशः ।
यथा ।
परिहृतरोषा कृतबहुवेषा सह निजभर्ता तरुणि वसंते ।
प्रमुदितपुंस्कोकिल इव रम्यां व्रज वनराजिं कुसुमविचित्राम् ॥ ५८

रसैर्जसजसा जलोद्धतगतिः । ५९

यत्र जगणसगणजगणा सगणश्च तद्वृत्तं जलोद्धतगतिर्नाम । यथा ।
अतीत्य सरितो जलोद्धतगतीरनेकगहना कुलानपि गिरीन् ।
समुद्रतरमाश्रिता रिपुनृपाः सुखं न निशि शेरते तव भयात् ॥ ५९

भुजंगप्रयातं भवेद्यैश्चतुर्भिः । ६०

चत्वारो यगणा यत्र तद्वृत्तं भुजंगप्रयातं नाम । यथा ।
विदग्धांगनालोचनानन्दकारी सखि स्वेच्छया वीक्षितुं प्राणनाथः ।
मया नैव लब्धो हत ग्राममार्गे भुजंगप्रयातानुकारिण्यमुष्णिग् (?)॥ ६०

रैश्चतुर्भिर्युता स्रग्विणी संमता । ६१

चत्वारो रगणा यस्य पादे तद्वृत्तं स्रग्विणी नाम । यथा ।
पद्मपत्रायताक्षी शशांकानना कुंकुमोद्वर्तितांगी घनोच्चस्तनी ।
अंगहारैरनेकप्रकारैर्युता नृत्यति स्त्री सखे स्रग्विणी सुंदरा ॥ ६१

भुवि भवेन्नभजरैः प्रियंवदा । ६२

नगणभगणजगणरगणा यत्र तद्वृत्तं प्रियंवदा नाम । यथा ।
गुरुपयोधरवती सुमध्यमा विपुलपुण्यनिचयैः स्ववेश्मनि ।
भवति पार्वणशशांकसुंदराननवती प्रियतमा प्रियंवदा ॥ ६२

त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः । ६३

तगणयगणतगणयगणा यत्र तद्वृत्तं मणिमाला नाम । षड्भिर्यतिः । यथा ।
मातः सुरसिन्धो त्रैलोक्यपवित्रे पश्यामि कदा ते पापापहमम्भः ।
चंचन्मणिमालालंकारमणीनां त्यक्त्वा वनितानां संगं विषतुल्यम् ॥ ६३

धीरैरभाणि ललिता तभौ जरौ । ६४

यत्र तगणभगणजगणरगणास्तद्वृत्तं ललिता नाम । यथा ।
पीनोन्नतस्तनभरोपरिस्फुरद्धारावलीसुभगमायतेक्षणा ।
नृत्यत्यसौ सुललितं हि नूपुराध्वानप्रबोधितमनोभवा वधूः ॥ ६४

प्रमिताक्षरा सजससैरुदिता । ६५

सगणजगणौ सगणौ यत्र तद्वृत्तं प्रमिताक्षरा नाम । यथा ।
चरणानतिं गतवति प्रसभं दयिते नितांतसुभगे सुभगे ।
परुषाणि संत्यज वचांसि सखि प्रमिताक्षरा भव शशांकमुखि ॥ ६५

ननभरसहिताऽभिहितोज्ज्वला । ६६

द्वौ नगणौ भगणरगणौ च यत्र तद्वृत्तं उज्ज्वला नाम । यथा ।
इह शरदि भवन्त्युकाशया (?) विमलतरशशांककरोज्ज्वला ।
विदधति गमनं विजयार्थिनः प्रतिदिवसमवनीपतयः स्वयम् ॥ ६६

पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ । ६७

द्वौ मगणौ द्वौ यगणौ च यत्र तद्वृत्तं वैश्वदेवी नाम । पञ्चभिः सप्तभिर्यतिः । यथा ।
वश्यात्मा नित्यस्नानशीलो महात्मा मित्रे शत्रौ वा तुल्यचित्तप्रवृत्तिः ।
श्रद्धासंपन्नो वैश्वदेवी च लोके स स्वर्गस्त्रीणां वल्लभः स्यात्सदैव ॥ ६७

अब्ध्यंगैः स्याज्जलधरमाला म्भौ स्मौ । ६८

मगणभगणसगणमगणा यत्र तद्वृत्तं जलधरमाला नाम । चतुर्भिरष्टभिश्च यतिः । यथा ।
सत्याकाशे जलधरमालाव्याप्ते नीपामोदे प्रसरति झंझावाते ।
वर्षाकाले मुदितमयूरव्राते त्यक्त्वा कान्तां व्रजसि कथं पाथ त्वम् ॥ ६८

इह नवमालिनी नजपरौ भ्यौ । ६९

नगणजगणभगणयगणा यत्र तद्वृत्तं नवमालिनी नाम । इहेत्यवग्रहणादब्ध्यंगैरिति पदविरीततया विपरिणमति तेनाष्टभिः चतुर्भिर्यथा ।
तव निशितासिघातदलिता रिद्विपदकुम्भमौक्तिकसमूहैः ।
कृतनवमालिनीव भजति त्वां प्रति स्मरं नरेन्द्र जयलक्ष्मीः ॥ ६९

स्वरशरविरतिर्नौ रौ प्रभा नाम । ७०

भवति नजावथ मालती जरौ । ७१
नगणजगणौ जगणरगणौ यत्र तद्वृत्तं मालती नाम । यथा ।
भ्रमरयुवा भ्रमतीह मालतीतरुतलमप्यपहाय केतकीम् ।
युवतिजनेन गृहीत नाम कः कथमपि न प्रतिबोधमेत्यसौ ॥ ७१
वरतनुरित्येके ।

जरौ जरौ वदन्ति पञ्चचामरम् । ७२

इति वद तामरसं नजजाद्यः । ७३

नगणजगणौ जगणयगणौ यत्र तद्वृत्तं तामरसमिति वद शिक्षमिति शेषः । यथा ।
मृदुतरतामरसारुणपादव्रणतितिविस्रवदस्रजलौघाः ।
विदधति पर्व तिरोधसि यानं करपिहितोच्चकु वा रिपुवधः ॥ ७३

## अतिजगत्याम् ।

तुरगरसयतिर्नौ ततौ गः क्षमा । ७४

यत्र द्वौ नगणौ द्वौ तगणौ गुरुश्च तद्वृत्तं क्षमा नाम । यथा ।
सप्तभिः षड्भिश्च यतिः । यथा ।
चकितमृगदृशा नेक्षितो लीलया त्रिवलितवदनश्रीचयाहं मुहुः ।
न च सुरतटिनी न क्षमा चाश्रिता गतमिदमधुना जीवितं मे वृथा ॥ ७४

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् । ७५

मगणनगणजगणरगणगुरवो यत्र तद्वृत्तं प्रहर्षिणी नाम । त्रिभिर्दशभिर्यतिः । यथा ।
लोलाक्षी विपुलनितम्बबद्धकाञ्ची पीनोच्चस्तनयुगला सुरोमराजिः ।
नृत्यन्ती सुललितमंगहाररम्यं वारस्त्री गमनलसत्प्रहर्षिणीयम् ॥ ७५

पाठान्तरम् ।
चतुर्ग्रहैरिह रुचिरा जभौ स्जौ गः । ७६
चतुर्ग्रहैरिह रुचिरा जभैस्जगाः । ७६

जगणभगणसगणजगणा गुरुश्च यत्र तद्वृत्तं रुचिरा नाम । यथा ।
समीहते य इह परापदापदं वियच्छरित्तटरुचिरोटजालयः ।
मृगीदृशो वदनसरोजदर्शनं न तस्य तत्प्रमदकरं कवत् ॥ ७६

वेदै रन्ध्रैम्तौ यसगा मत्तमयूरम् । ७७

यत्र मगणतगणयगणसगणगुरवस्तद्वृत्तं मत्तमयूरम् । चतुर्भिर्नवभिर्यतिः । यथा ।
चञ्चं चूतं पुष्पितकं केल्लितरूभिः क्रीडत्क्रोडं संचरदुन्मत्तमृगोधम् ।
स्निग्धच्छायं वारिततापं तरुखण्डैः माद्यद्भृंगं मत्तमयूरं वनमेतत् ॥ ७७

पाठान्तरम् ।
नजसजगैर्भवति मञ्जुभाषिणी । ७८
सजसा जगौ भवति मञ्जुभाषिणी । ७८

यस्य पादे सगणजगणसगणजगणा गुरुश्च तद्वृत्तं मञ्जुभाषिणी नाम । यथा ।
स्मर सुंदराकृतिमनेकवल्लभं चरणप्रणामनतमीप्सितं पतिम् ।
परुषोक्तिभिः किमिति खेदयस्यमु सखि वल्लभा भवति मञ्जुभाषिणी ॥ ७८

इह नंदिनी सजससैर्गुरुयुक्तैः । ७९

सश्च जश्च सश्च सश्च तैः सगुरुभिर्नन्दिनी । ७९

ननतरगुरुभिश्चन्द्रिका चतुर्भिः । ८०

द्वौ नगणौ तगणरगणौ गुरुश्च यत्र तद्वृत्तं चन्द्रिका नाम । चतुर्भिर्यतिर्यथा ।
वितरति कुमुदानां श्रियं समग्रां तम इव वनितानां भिनत्ति मानम् ।
ततमपि भुवनं चन्द्रिका भुवस्थाधवलितमिव चक्रे शरन्निशासु ॥
अष्टभिर्यतिरित्येके । ८०

## शक्वर्याम्

म्तौ न्सौ गावक्षग्रहविरतिरसंबाधा । ८१

मगणतगणनगणसगणा द्वौ गुरू च यत्र तद्वृत्तं असंबाधा नाम । अक्षैरिन्द्रियैः पञ्चभिर्ग्रहैर्नवभिश्च यतिः । यथा ।
यावद्गच्छेयं दयितविहितसंकेतस्थानस्याभ्यां सङ्कृतनिवृततुलाकोटिः ।
तावच्चक्रेऽग्रे द्रुतमुदयमयं वैरी भित्वा संबंधान्यपि सखि तिमिराणीन्दुः ॥ ८१

ननरसलघुगैः स्वरैरपराजिता । ८२

द्वौ नगणौ रगणसगणलघुगुरवो यत्र तद्वृत्तं अपराजिता नाम ।
सप्तभिर्यतिः । यथा ।
तुरगरजवतीं तुलार्कमहीपतेरितरनृपशतैश्चमूमपराजिताम् ।
जयति विजयिदोर्युगैकसहायवानवनिपतिरसौ प्रमारकुलोद्भवः ॥ ८२

ननभनलगिति प्रहरणकलिका । ८३

नगणौ भगणनगणलघुगुरवश्च यत्र तद्वृत्तं प्रहरणकलिका नाम । इति शब्दस्याव्ययस्य ग्रहणात्सैव यतिः । यथा ।
रणभुवि भवता प्रहरणकलिता परहृतवनितास्तव नृप रिपवः ।
विदधति शयनं कृततृणशयना वनभुवि सततं भयचकितहृदः ॥ ८३

उक्ता वसंततिलका तभजा जगौ गः । ८४(१)

तगणभगणौ द्वौ जगणौ द्वौ गुरू च यस्य पादे तद्वृत्तं वसंततिलका नाम । यथा ।
भ्रातर्वसंततिलकानतिमुक्तकं च संदश्यतेऽत्र किमु मत्परमस्त्वमेतत् ।
नाऽहं स योऽभवदनेकविधोत्सवश्रीः संप्रत्यसत्यविरहैकगृहं प्रियायाः ॥

सिंहोद्धतेयमुदिता मुनिकाश्यपेन । ८४(२)

इयमेव वसंततिलका कश्यपस्याचार्यस्य मतेन सिंहोद्धता नाम । यथा ।
उन्निद्रपद्मवदनः सुभगोऽङ्गनानामारक्तपादतलपाणीरदीनसत्त्वः ।
सिंहोद्धता समगलः सुविशालवक्षाः स्यादीदृशो नरपतिः पुरुषः पृथिव्याः ॥

उद्धर्षिणी निगदिता मुनिसैतवेन । ८४(३)

सैव वसंततिलका सैतवमुनिना उद्धर्षिणी निगदिता उक्ता । यथा ।
संवत्सरे रसपयोनिधिसूर्यसंख्यैः श्रीविक्रमान्नरपते रचिता ममेयम् ।
उक्ता सनामभिरुदाहरण्यैरुदारैरुद्धर्षिणी भवतु चेतसि सत्कवीनाम् ॥

गोमेन सैवमुदिता मधुमाधवीति । ८४(४)

वसंततिलकामित्येके । ८४

इन्दुवदना भजसनैः सगुरुयुग्मैः । ८५

भगणजगणसगणनगणा द्वौ गुरू च यस्य पादे तद्वृत्तमिन्दुवदना नाम । यथा ।
मारुतवशप्रचलितोत्पलदलाक्षं शोभनललाटतटमध्यकृतपुण्ड्रम् ।
रे पथिक संप्रति मधौ मदनबन्धौ संस्मरसि तद्वदनमिन्दुवदनायाः ॥ ८५

द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् । ८६

यस्य चरणे पादे मगणसगणमगणभगणा द्वौ गुरू तद्वृत्तं अलोला नाम । सप्तभिर्यतिः । यथा ।
यो देव द्विजभक्तः संसारेषु विरक्तः श्रौतस्मार्तविधीनां कर्ता त्यक्तविकल्पः ।
मैत्रः कारुणिकात्मा क्रोधामर्षविमुक्तस्तस्य श्रीभुवने स्याल्लोला नूनमलोला ॥ ८६

अतिशक्वर्याम् ।

द्विहतहयलघुरथ गिति शशिकला । ८७

द्विहतहयलघुरित्यर्थः गुरुश्च भवति यस्य चरणे तद्वृत्तं शशिकला नाम । सप्तभिरष्टभिर्यतिः । पारिशेष्याद्यथा ।
कुसुमशरतनुदहनशिरसि जटामुकुटतटमणिरमलकिरणा ।
तव भवतु सुखकृदयमिह सततं प्रविपदि सुनभसि वसति शशिकला ॥ ८७

स्रगिति भवति रसनवकयतिरियम् । ८८

षड्भिर्नवभिश्च यदा यतिर्भवति तदा स्रगिति नाम । मालेति वक्तव्ये छंदोभंगभयात् स्रगित्युक्तम् । एकार्थत्वान्न दोषः । यथा ।
घनपरिमलमिलितमधुपनिचया स्रगियमुरसि तव शशिमुखि शुशुभे ।
कटकयुगलमपि कलरवसुभगं श्रियमिदमिह जनयति सुचरणया ॥ ८८

वसुहययतिरिति मणिगुणनिकरः । ८९

इयमेव शशिकला वस्वष्टभिर्हयैः सप्तभिर्यदा मणिगुणनिकरः नाम । यथा ।
परजनहितकरवरधनकलितः सुवचनकृतवरजनसुखनिवहः ।
भवभुवि भवकृतवरतरमहिमा स भवति नरवर मणिगुणनिकरः ॥ ८९

ननमयययुतेयं मालिनी भोगिलोकैः । ९०

द्वौ नगणौ मगणो द्वौ यगणौ यस्य तद्वृत्तं मालिनी नाम । यथा । अष्टभिः सप्तभिर्यतिः ।
नवजलधरमालामालिनीं तां विलोक्य
निजदयितवियोगप्रान्तभावं निबोधम् ।
न न खलु जलधराणां नादमाकर्ण्य कश्चि-
द्भवति शिथिलबुद्धिर्वेश्म गन्तुं प्रवासी ॥ ९०

भवति नजौ भजौ रसहितौ प्रभद्रकम् । ९१

यस्य पादे नगणजगणभगणजगणरगणास्तद्वृत्तं प्रभद्रकं नाम । यथा ।
अलभत दुश्चरेण तपसा हिमाद्रिजा
यमिह पतिं पतिं त्रिजगतां महेश्वरम् ।
पवनसमुद्धुतामलिशिखाहुतस्मरो
दिशतु सतां सदैव सवि सुप्रभद्रकम् ॥ ९१

सजना नयौ शरदशकविरतिरेला । ९२

सगणजगणनगणनगणयगणा यत्र तद्वृत्तमेला नाम । पंचभिर्दशभिर्यतिः । यथा ।
वरचंदनद्रुमकिशलयमरिचैला-
लवलीलताप्रभृतिवनमिह धुन्वन् ।
मलयानिलः सपदि विदलितप्रयुक्त-
प्रमदाजनः प्रसरितपतिबन्धुः ॥ ९२

म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा । ९३

यस्य पादे मगणरगणमगणा द्वौ यगणौ तद्वृत्तं चन्द्रलेखा नाम । सप्तभिरष्टभिर्यतिः । यथा ।
विभ्रान्तिश्चन्द्रलेखां चूडामणिस्थानभृत्तां
यस्तार्तीयं च नेत्रं जाज्वल्यमानं ललाटे ।
कण्ठे यस्यास्थिमाला भस्मांगरागः शरीरे
कल्पांतां वः स दश्यात्त्रैलोक्यनाथो गिरीशः ॥ ९३

## अष्टौ

भ्रत्रिनगैः रसात्खमृषभजगविलसितम् । ९४

भगणरगणौ त्रयो नगणा गुरुश्च यत्र तद्वृत्तं ऋषभगजविलसितं नाम । षट्दशभिर्यतिः ।
यत्र चतुष्पथेषु विविधयुवतिजनता
साममनोरमेषु तव रिपुवरनगरे ।
त्वद्भुजविक्रमेण नृपतिवर विजयति
संप्रति तत्र वन्यमृषभगजविलसितम् ॥ ९४

नजभजरैः सदा भवति वाणिनी गयुक्तैः । ९५

नगणजगणभगणजगणरगणा गुरवो यत्र तद्वृत्तं वाणिनी नाम । यथा ।
चकितमृगेक्षणा गुरुनितम्बबद्धकाञ्ची
गुणकलकिंकिणीरवविबोधासमेषुः ।
जनयति वाणिनी चतुरवाक्यपण्डितेयं
मुदमधिकां सखे मनसि करोति दृष्टा ॥ ९५

## अत्यष्टौ

रसैः रुद्रैश्छिन्ना यमनसभला गः शिखरिणी । ९६

यगणमगणनगणसगणभगणा लघुगुरू च यत्र तद्वृत्तं शिखरिणी नाम । षड्भिरेकादशभिर्यतिः ।
शशांकास्या चंचत्कुवलयदलस्पर्धिनयना
सलीलं गच्छंती गुरुजघनभारालसगतिः ।
इयं पीनोत्तुंगस्तनशिखरिणी वारवनिता
कटाक्षैर्विक्षोभं जनयति मुनीनामपि हृदि ॥ ९६

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः । ९७

जगणसगणजगणसगणयगणलघुगुरवो यत्र तद्वृत्तं पृथ्वी नाम । यथा ।
किमित्ययमसंस्कृतस्तव सुकेशि केशोच्चयः
किमित्युत सुमेखलाविरहिता च पृथ्वी कटिः ।
तदेहि कुरु मण्डनं त्यज रुषं वसंतोत्सवे
यतः सुतनु पञ्चषैरपि दिनैर्वयो यास्यति ॥ ९७

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः । ९८

भगणरगणनगणभगणनगणलघुगुरवो यत्र तद्वृत्तं वंशपत्रपतितं नाम । दशभिः सप्तभिर्यतिः । यथा ।
नैव विदुस्तृषातुरधियस्तव रिपुनगरे
मंदिरदीर्घिकासु सलिलं सविधमपि मृगाः ।
अम्बुजवंशपत्रपतितद्रुमदलनिकरैः
छादितमातपे तु महति क्षितिपति तलका (?) ॥ ९८

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा । ९९

नगणसगणौ मगणरगणौ सगणलघुगुरवो यत्र तद्वृत्तं हरिणी नाम । षड्भिः चतुर्भिर्यतिः । यथा ।
वदनममलं धत्ते शोभां शशांकसमाश्रितां
श्रवणयुगलं दोलालीलां तनोति मनोभुवः ।
स्तनपरिसरे हारः स्फारः स्फुरत्यतिनिर्मलः
किमिह न चेत्तस्याहारि ध्रुवं हरिणीदृशः ॥
ऋषभचरितमित्येके । ९९

मन्दाक्रान्ता जलधिषडगैः म्भौ नतौ ताद्गुरू चेत् । १००

मगणभगणनगणा द्वौ तगणौ द्वौ गुरू च यस्य पादे तद्वृत्तं मन्दाक्रान्ता नाम । चतुर्भिः षड्भिश्चेद्यतिर्भवति । यथा ।
मन्दाक्रान्ताधरकिसलया पाणिपद्मं धुनाना
गाढाश्लेषप्रणयिशिथिला वेपमानांगयष्टिः ।
स्विद्यद्वक्त्रा पुलकिततनुः किंचिदामीलिताक्षी
चेतःप्रीतिं जनयति भृशं नूतनोढा विवोढा ॥ १००

यदि भवतो नजौ भजजला गुरुर्नर्कुटकम् । १०१

नगनजगणभगणा द्वौ जगणौ लघुगुरू अह तद्वृत्तं नर्कुटकं नाम । अवितथमिति अन्ये । यथा ।
सुरभिसमागमे विरहिणीजनशोककरे
कृतबहुमण्डना त्वमतिभामनि मद्वचनैः ।
निजदयितांतिकं यदि न यासि गतं तदहो
अवितथवाक्यकौशलमिदं मम निष्फलताम् ॥ १०१

मुनिगुहकार्णवैः कृतयतिं वद कोकिलकम् । १०२

नर्कुटकमेव सप्तभिः गुहकैः कार्तिकेयशिरोभिः षड्भिश्चतुर्भिः कृतयतिं तद्वृत्तं वद कोकिलकं हे शिष्येति विशेषः । यथा ।
मदनमहोत्सवे मुदितकोकिलकान्तरवे
न भजति या प्रियं प्रणयसुन्दरमिन्दुमुखि ।
ध्रुवमिह साबला स्वयमहर्निशमेव भृशं
सखि परितप्यते गुरुमनोभवतापवती ॥ १०२

## धृतौ

स्याद्बाणर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ । १०३

मगणतगणौ नगणस्त्रयो यगणा यत्र तद्वृत्तं कुसुमितलतावेल्लिता नाम । पंचभिः षड्भिः सप्तभिर्यतिः । यथा ।
उद्यानाब्जानां प्रकरधुननावाससौरभ्यसंपत्
कंकोलैलानां कुसुमितलतावेल्लितान्यः पुनानः ।
आगस्त्यो वायुर्दिवि सुरतायासयातांगनानां
स्वेदाम्भोबिन्दून्हरति पुनरप्यादिशन्संगमेच्छाम् ॥ १०३

## अतिधृत्याम्

रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुता मेघविस्फूर्जितं स्यात् । १०४

यगणमगणनगणसगणा द्वौ रगणौ गुरुश्च यस्य पादे तद्वृत्तं मेघविस्फूर्जितं नाम । षड्भिः षड्भिः सप्तभिर्यतिः । यथा ।
समायातः स्वैरं कुटजकुसुमामोदवाही समीरः
श्रुतं धैर्यं ध्वंसि प्रसभमधुना मेघविस्फूर्जितं च ।
वियोगे सद्धर्तुः निजलवणिमाऽधःकृतस्वंतिजस्य
प्रयान्ती मे प्राणा कुलिशकठिना मेघनाशं तथापि ॥ १०४

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् । १०५

मगणसगणजगणसगणा द्वौ तगणौ गुरुर्यस्य पादे तद्वृत्तं शार्दूलविक्रीडितं नाम । द्वादशभिः सप्तभिर्यतिः । यथा ।
श्रीखण्डाचलकंदरात्सरभसं निर्गत्य सांद्रं द्रुमां-
श्चंचच्चम्पकचारुकेसरभरं धन्वन्मुहुर्लीलया ।
इत्थं विभ्रदयं वसन्तपवनः शार्दूलविक्रीडितम्
स्त्रीणां मानगजं हनिष्यति हठात् मानोत्कटानामपि ॥ १०५

## [कृतौ]

ज्ञेया सप्ताश्वषड्भिर्मरभनययुतो भ्लौ गः सुवदना । १०६

यस्य वृत्तस्य पादे मगणरगणभगणनगणयगणभगणलघुगुरुस्तद्वृत्तं सुवदना नाम । सप्तभिः सप्तभिः षष्ठश्च यतिः ।
रम्भास्तम्भोपमोरुः सुगुरुघनकुचा सारंगनयना
मध्यक्षामा सुरोमावलिरमलमदंता चन्द्रवदना ।
हृत्स्थं भावं कटाक्षैर्निजमिव कथयत्येषा सुवदना
यूनां चेतांसि सद्यो मदयति युवतिश्छेकोक्तिकुशला ॥ १०६

त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्त नाम । १०७

त्रीन्वारान्रगणजगणौ गुरुलघू यस्य पादे तद्वृत्तं वृत्त नाम वृत्ताभिधानमित्यर्थः ।
संपदाप्तिसम्भवो मदः कदाचिदेव मानसे नगस्य
न प्रमाणविद्यया परप्रमेयजालभंगदक्षयाऽपि ।
नाप्यरूपरूपया परांगनाभिमर्शनो रसः कदापि
तस्य वृत्तमीदृशं शिरोभिरुह्यते नरैरतो विचार्यः ॥ १०७

## प्रकृतौ

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् । १०८

मगणरगणभगणनगणा यगणत्रयं यस्य पादे तद्वृत्तं स्रग्धरा नाम । वारत्रयं सप्तभिर्यतिः ।
यासामुन्निद्रपद्मद्युतिमुखममलं स्फारविस्फारिताक्षम्
चञ्चत्काञ्चीगुणेन स्फुरदुरुमणिनाऽऽवर्तलक्ष्मीं वितन्वत् ।
चेतःप्रीतिं नराणां विदधति विलसन्नाभिमध्यप्रदेशा
गच्छन्त्यो राजमार्गे विकचविचकिलस्रग्धरा राजवध्वः ॥ १०८

## आकृतौ

भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं हि मद्रकमिदम् । १०९

भगणरगणनगणा रगणनगणरगणनगणगुरवो यस्य पादे तद्वृत्तं मद्रकं नाम । दशभिर्द्वादशभिर्यतिः । यथा ।
त्वत्कथितैरलीकवचनैः करोमि कथमस्य कोपमसमम्
यस्य न विप्रियं सखि मया श्रुतं न च निरीक्षितं कथमपि ।
मद्रकरैरयं प्रियतमः करोति वचनैर्मनः समदनम्
पाश्यविमुक्तजालमधुना ममाङ्घ्रियुगले लुठत्यपि भृशम् ॥ १०९

## विकृतौ

यदिह नजौ भजौ भ्जभलगास्तदाश्वललितं हरार्कयतिमत् । ११०

यस्य पादे नगणजगणौ भगणजगणभगणजगणभगणलघुगुरवो भवन्ति तद्वृत्तं अश्वललितं नाम । एकादशभिर्द्वादशभिर्यतिः । यथा ।
समरविनिर्जितारिनिवहक्षितीश्वरविचित्रमश्वललितम्
हृदयचमत्कृतिप्रदमिदं विलोक्य भवतो वदन्ति कवयः ।
ध्रुवमुररीचकार नृपतेर्दिवस्पतिरिमं तुरंगमवरं
बहुतरमन्यथा न वियति क्रथैरिह विवेलतेऽतिबहुलैः (?) ॥ ११०

मत्ताक्रीडं मौ त्नौ नौ न्लौ गिति भवति वसुशरदशयतियुतम् । १११

यस्य पादे द्वौ मगणौ तगणनगणौ द्वौ नगणौ नगणलघुगुरवस्तद्वृत्तं मत्ताक्रीडं नाम । अष्टभिः पञ्चभि दशभिश्च यतिः । यथा ।

दृष्ट्वा चान्द्रं बिम्बं रात्रौ करनिकरविनिहिततिमिरनिकरम्
गायन्ति स्म स्वैरं यस्मिन्सुविकसितकुसुमवति मधुसमये ।
पौरा बद्धास्तस्मिन् संप्रत्यवनिपतितिलक तव नगरे
मत्ताक्रीडातिस्वच्छन्दं विगतभयभवभमितमृगनिवहाः ॥ १११

## संकृतौ

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी । ११२

भगणतगणनगणसगणा द्वौ भगणौ नगणयगणौ यस्य पादे तद्वृत्तं तन्वी नाम । पंचभिः सप्तभिरादित्यैश्च यतिः । यथा ।
या मुखपद्मं शशधरसदृशं सुन्दरलोलनयनमतिरम्यम्
सुभ्रु बिभर्ति त्रिभुवनजयिनो वासनिवासमिव मकरकेतोः ।
पीननितम्बा गुरुकुचयुगला वृत्तसुकोमलभुजकरयुग्मा
सा मम चित्ते जनयति युवती हर्षमनल्पमियमिह सुतन्वी ॥ ११२

## अतिकृतौ

क्रौञ्चपदा भ्मौ स्भौ ननना न्गी इषुशरवसुमुनिविरतिरिह भवेत् । ११३

भगणमगणसगणभगणाश्चत्वारो नगणा गुरुश्च यस्य पादे तद्वृत्तं क्रौञ्चपदा नाम । पञ्चभिरष्टभिः सप्तभिश्च यतिः । यथा ।

क्रौञ्चपदा या रोमशगात्री विकटदशनतनिरतिपरुषतनुः
पिंगलदृष्टिः सूक्ष्मनितम्बा कपिलकचनिचयविषमकुचयुगा ।
या च हसन्ती लोचनवारि प्रकटयति रहसि निजपतिविमुखी
मुञ्च सखे तामिष्टतमं चेच्चिरतरमिह तव चर विषयसुखम् ॥ ११३

## उत्कृतौ

वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजंगविजृम्भितम् । ११४

द्वौ मगणौ तगणस्त्रयो नगणा रगणसगणौ लघुगुरू च यस्य पादे तद्वृत्तं भुजंगविजृम्भितं नाम । अष्टभिरेकादशभिः सप्तभिर्यतिः । यथा ।
प्रालेयांशुज्योत्स्नाकांतद्युतिशुभमविमलसद्वितानमनोहरे
क्रीडागारे चञ्चच्चिरत्र कुसुमपरिमलमिलदलिव्रजेशुधयोज्ज्वले ।
प्रेमोद्रेका वेश्यावृत्तं कुलयुवतिरपि वितनुते यदा सुरतोत्सवे
प्रेयानप्यानन्देनेव प्रकटयति रहसि न तदा भुजंगविजृम्भितम् ॥ ११४

मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम् । ११५

यस्य पादे मगणो नगणा षट् सगणो द्वौ गुरू च यत्र तद्वृत्तमपवाहं नाम । नवभिः षड्भिः षड्भिः पंचभिः यतिः । यथा ।
आत्मानं कलयति तृणमिव सुरगुरुधरणितलसुरगवामर्थो
यो नित्यं विकसितमुखकमलमिह वितरति धनममलमर्थिभ्यः ।
संपत्या समुपहसितधनदविभवनिवहदौरभ्यात्
लोकः पश्यति विगलितबहुविधिमतिमतिकृशतनुमपवाहं तम् ॥ ११५

## ॥ उक्तादिजातिप्रकरणम् ॥

अत एवं उर्ध्वं शेषजातिप्रकरणं भवति । तच्चात्र नोक्तं ग्रन्थगौरवभयात्केदारेण एवमुक्तादिजातिषु उत्कृत्यवसानासु श्रीप्रभृति अपवाहान्तानि समवृत्तानि पदर्श(?) । 'यत्किंचिद्दृश्यते छन्दः षड्विंशत्यधिकाक्षरम् । शेषजात्यादिकं मुक्त्वा तत्सर्वं दण्डका विदु'रित्यादिलक्षणान् दण्डकानाह ।

यदिह नयुक्तगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रयातो भवेद्दण्डकः । ११६

इह शास्त्रे चण्डवृष्टिप्रयातो नाम दण्डको भवेत् । यदा नगणौ द्वौ सप्तरगणाश्च भवन्ति । शतमाण्डवाभ्यामृषिभ्यामनेकाऽस्य संज्ञा कृता । यथा ।
कुवलयदलदीर्घनेत्रा सुमध्या पृथुश्रोणिबिम्बा नवप्रागसंसक्तहृत्
प्रथमविरहपीडिता सा मृता प्रेयसी गर्जितं वारिदानां निशम्य ध्रुवम् ।
नभसि कुटजपुष्पसंभारगंधासवोन्मत्तभृंगांगना गीयमानागमे
हत पथिक वृथा किमायास.................................. ।
चण्डवृष्टिरित्येके । ११६

प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशंखादयः । ११७
चरणं चरणं प्रति प्रतिचरणं रगणानां वृद्ध्या इहार्णादयो दण्डकास्स्युः ।

अष्टभी रगणैरर्णो यथा ।
श्रमसलिलमपकरोति द्रुतं कामिनीनां रसायासजं मरुच्चीकरामोदवान्
जनयति मधुपस्य तीरद्रुमाली लसत्पल्लवालंकृतां कामिनीविभ्रमादेशकम् ।
अयमिह दयितैः पुरोर्णानिधिं यस्य शक्यं समसायुवज्रप्रहारानभिज्ञभ्युसी (?)
भुजगपुरवधूलसल्लोचनानन्दकरो स्फुरन्ती न लीलां तनोति राजात्मजः ॥

नवभी रगणैरर्णवो यथा ।
त्रिनयननगतुंगशृंगश्रियं बिभ्रदुद्दण्डडिंडीरपिण्डावदातैस्तरंगोत्तरैरुल्लसन्
मकरतिमितिमिंगिलो विस्तृताधिष्ठितक्रोडसंप्राप्तशोभैर्नभःप्रांगणज्ञापकैः ।
भुजगशयनशयितो देवदेवस्य यो वास वेश्मश्रियो जनेनार्णवसोऽयमग्रीः प्रिये
तव नयनपथं प्रयातस्तनोतु प्रमोदं विनोदास्पदं तीरसंभूतपुन्नागपूगद्रुमैः ॥

दशभी रगणैः व्यालो यथा ।
प्रसयति मलयानिले विप्रयुक्तांगनादीर्घनिःश्वाससंपर्कसंववर्धितप्रौहितावेमतोनन्दनि
स्फुडितबकुलकर्णिकाराम्रदुन्नागमाकंदकंकिल्लिसच्चम्पकामोदवाहिन्यमुष्मिन् वसंतागमे।
भज चरणयुगानतं संनतांगिप्रियं प्रीतिसंदोहकामिनी नाम नगातुराणां मृगीचक्षुषाम्
तरुणीमनि (?) सखि स्फुरज्ज्वालजिह्वाग्रलोलेऽङ्गनानां सदा सौख्यं विध्वंसिनाऽनेन किं दग्धमानेन ते ॥

तैरेकादशभिर्जीमूतैर्यथा ।

प्रियविरहितकामिनी जीविता सा विनाशैकदक्षानिलोद्धूतकादम्बपुष्पासवामूर्च्छितशेषभृंगध्वजो ।
नभसि नभमिवांक्षसौदामिनीमालयालंकृतं नीलजीमूतपंक्तिं बलाकावलीसेवितां लोचनानन्ददाम् ।
विरचितमधुरस्वरं चातकानां च रम्यं समूहं तु सास्कांतमप्युन्मदं(?) भाविनीं तृप्तिमाकांक्षमाणम् ।
मुहुकृतवितितसुबर्हिभारः शिखीसंवन्मन्मथा प्रेयसी प्रीतिमुत्पादयन् नृत्यति स्वाङ्घ्रिविन्यासस‍ौंदर्यवत् ॥

द्वादशभिर्लीलाकरो यथा ।
अभिनवनवपल्लवास्वादसंशुद्धकण्ठान्यपुष्टांगनासुंदरारध्वगीतध्वनिप्राप्तबोधिर्यदि चक्रवाले वने ।
कुसुमितबहुपाटला कर्णिकाराम्रसत्सिंदुवारोत्तमाशोकसत्पुष्पभारा वनश्रीकृताशेषशाखालसत्पल्लवे वने ।
विलपति वनिता घनस्याभिमानग्रहं लास्यलीलाकरो माधवी पल्लवानामयं कामदेवैकबन्धवसन्तानिलो ।
जगति विजयिनीं स्मराज्ञामिवाविष्करोत्यंगनानां रतायासजस्वेदबिन्दुप्रसक्तालकप्रांतकंपं विधित्सुर्मुहुः ॥

त्रयोदशभी रगणैरुद्दामो यथा ।
शशधरसदृशं मुखाम्भोरुहं बिभ्रती पक्वबिम्बाधरोद्दामहारावलीशोभितोच्चस्तनी सूक्ष्मरोमावलीप्राप्तनाभिहृदा ।
श्रवणयुगनिवेशितस्वर्णताण्डंकसंलग्नरत्नप्रभासितापांगरंगांगणोत्संगसंनृत्यमानेक्षणक्षोभितक्ष्मातला ।
कलरववरकिंकिणीपक्वणन्मेखलालंकृतश्रोणिबिम्बानुवृत्तानुपूर्वोरुयुग्मा सरोजारुणाङ्घ्रिद्वयन्यस्तसन्नूपुरा ।
हृदयमशरणं मुनीनामपीयं सलीलं व्रजंती करोति स्फुरच्चीवरप्रांजलोद्बोधितानंगलक्ष्मीकृताशेषलोकं भृशाम् ॥

चतुर्दशभी रैः शंखो यथा ।
क्वचिदुपरि तरच्चंदवल्लीवितानैः क्वचिदद्रुमाणां लतासंचयैः संचरन्नक्रचक्रैः क्वचिन्नीरसंभूतपूगद्रुमैः शोभितम् ।
क्वचिदपि घनसांम्रहिंतालतालावलीचारुताम्बूलवल्लीसमूहैः (?) क्वचिद्व्यालसल्लोलकोलाहलोत्पादितोर्वीप्रकंपम् ।
क्वचिदभिनवचम्पकोन्निद्रचंचत्प्रस्तनासवामोदसंपर्कः संप्राप्तसौरभ्यसंपत्समीरागमातीततोयकणैः सेकितं नीरहृतं विद्रुतम् ।
सलिलनिधिमनेकरत्नाकरप्रीतिसंदोहदं सेतुसीमंतमंतं विलोक्य द्रुतं विलोचनानां निपातं च यस्याशु साफल्यमापादयः ॥

आदिशब्दात्पंचदशभिः रैः समुद्रः षोडशैर्भुजंग इत्येवमादयो यथेष्टकृतनामानो दण्डका भवन्ति । ११७

प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः । ११८

नगणद्वयानंतरं सप्तभिर्यैः प्रचितको नाम दण्डकः स्मृतः । पूर्ववदत्रापि प्रतिचरणविवृद्धरेफक्रमेण यगणादिसमस्तगणवृद्ध्या दण्डका भवन्ति । यथा ।
पूर्वमेकैकाक्षरवृद्ध्या छंदसां वृद्धिरुक्तास्तथा रेफोपलक्षिता त्रयेण वृद्धिः सा चाचार्यपारंपर्योपदेशात् तावद्ग्राह्या यावदेकोनमक्षरसाहस्रं भवन्ति । यद्यपि कैश्चिदुक्तं सहस्राक्षरपर्यन्ता दण्डका इति तथापि तृकाणां वृद्ध्या एकोनमेव सहस्रं भवन्तीति । ११८

## ॥ इति दण्डकप्रकरणम् ॥

इति सुल्हणविरचितायां सुकविहृदयानंदिन्यभिधानायां वृत्तरत्नाकरछन्दोवृत्तौ समवृत्ताध्यायस्तृतीयः ॥

# चतुर्थोऽध्यायः अर्धसमवृताध्यायः

अथार्धसमवृत्ताध्यायमाह ।

विषमे यदि सौ सलगा दले । भौ युजि भाद्गुरुकावुपचित्रम् । १

अत्र पादे इति वक्तव्ये अर्धसमवृत्ताध्याये त्वर्धापेक्षया अर्ध इत्युक्तं सूत्रकारेणेति न दोषः । विषमे प्रथमे तृतीये पादे त्रयः सगणा लघुर्गुरुर्यदि युजि समे द्वितीये चतुर्थे भगणत्रयं द्वौ गुरू तदा उपचित्रा नामार्धसमवृत्तं भवति । यथा ।
त्वदरातिपुरे क्षिति योद्धसे मुक्तमहोरगकंचुकेवंति (?) ।
उपचित्रमुदीक्ष्य दिवा भयान्नो विविशुर्भवनानि हरिण्यः ॥ १

भत्रयमोजगतं गुरुणी चेद्युजि च नजौ ज्ययुतौ द्रुतमध्या ॥ २

यस्यार्धसमवृत्तस्य ओजे विषमे प्रथमे तृतीये पादे भगणत्रयं द्वौ गुरू यदि युजि समे द्वितीये चतुर्थे नगणजगणौ जगणयगणौ च तद्वृत्तं द्रुतमध्या नाम । यथा ।
दृष्टिविलासविशेषमशेषं विविधगतीरवचोरचनां च ।
यौवनमेव वधू द्रुतमध्यापयति मनोभवदत्तविवेका ॥ २

सयुगात्सगुरू विषमे चेत् । भाविह वेगवती युजि भाद्गौ । ३

विषमे पादे त्रयः सगणा गुरुश्च युजि समे भवणत्रयं द्वौ गुरू च तदा वेगवती नाम । यथा ।
सुकृतैकनिधेः स्मरबन्धोः कस्यचिदालयमालि सलीलम् ।
इयमुन्नतपीननितम्बा गच्छति वेगवती मदनार्ता ॥ ३

ओजे तपरौ जरौ गुरुश्चेत् । म्सौ ज्गौ भद्रविराड्भवेदनोजे । ४

ओजे विषमे पादे प्रथमे तृतीये तगणात्परौ जगणरगणौ गुरुश्चेद्यदि भवति अनोजे समे द्वितीये चतुर्थे पादे मगणसगणजगणा गुरू च भवन्ति तद्वृत्तं भद्रविराट् नाम । यथा।
कुन्देन्दुसमुज्ज्वलेन बद्धं ब्रह्माण्डोदरवर्तिनां नरेन्द्र ।
नीता हरशैलसंध्यमेते शुद्धभद्रविराड् पयसे यशस्ते ॥ ४

असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद्गः । ५

असमे विषमे पादे सगणजगणसगणा गुरुश्च समे द्वितीये चतुर्थे भगणरगणनगणा द्वौ गुरू च तद्वृत्तं केतुमती नाम । यथा ।
भवता रणांगणगतेन प्रस्फुरितासिमात्रसचिवेन ।
विजितामराश्वगजयुक्ता केतुमती नरेन्द्र रिपुसेना ॥ ५

आख्यानिकी तौ जगुरू गमोजे जतावनोजे जगुरू गुरुश्चेत् । ६

ओजे प्रथमे तृतीये पादे तगणौ द्वौ जगणो गुरू च अनोजे द्वितीये चतुर्थे जगणतगणौ जगणो द्वौ गुरू च तद्वृत्तं आख्यानिकी नाम । यथा ।
ये ये त्वया संजति शत्रुभूपा हता हताशेषविपक्षवर्ग ।
आख्यानिकी कीर्तिरवन्तिनाथ बभूव ते संचरितांतरिक्षे ॥ ६

जतौ जगौ गो विषमे समे स्यात्तौ ज्गौ गमेषा विपरीतपूर्वा । ७

यस्य प्रथमे तृतीये पादे जगणतगणजगणा द्वौ गुरू च समे पादे द्वौ तगणौ जगणो द्वौ गुरू च तद्वृत्तं विपरीताख्यानिकी नाम । यथा ।
ध्रुवं समागच्छति जीवितेश श्रुत्वादिकारुण्यपरं वचो मे ।
भवेन्न चेद्दैववशादिहान्या आख्यानिकी मे विपरीतपूर्वा ॥
आख्यानिकी वार्ताहारिकोच्यते । एतयोश्च पूर्वोक्तोपजात्यंतर्गतत्वे विशेषसंज्ञार्धसमवृत्ताध्याये पाठः । ७

सयुगात्सलघू विषमे गुरुर्युजि नभौ च भरौ हरिणप्लुता । ८

यस्या विषमे पादे सगणत्रयं लघुगुरू च समे पादे नगणभगणौ भगणरगणौ च तद्वृत्तं हरिणप्लुता नाम । यथा ।
यदि शीघ्रगतिर्हरिणप्लुतान्सुविषमांस्तनुते पथिकः पथि ।
जलदागमने प्रियया तदा भवति संगतिरर्धशरीरया ॥ ८

अयुजि ननरला गुरुः समे न्जमपरवक्त्रमिदं ततो जरौ । ९
विषमे पादे नगणौ रगणो लघुश्च गुरुश्च भवन्ति समे पादे नगणजगणौ जगणरगणौ तद्वृत्तं अपरवक्त्रं नाम । यथा ।
जलदगलपिशंगलोचनं मदनरिपोः शशिखण्डमण्डितम् ।
अपहरतु भयानि दक्षिणं तदपरवक्त्रभयंकरं सताम् ॥
अस्य वैतालीयान्तर्गतत्वेऽपि विशेषसंज्ञार्थं इहोपन्यासः । ९

अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा । १०

यस्य विषमे पादे नगणद्वयं रगणात्परो यगणः समे नगणजगणौ जगणरगणौ गुरुश्च तद्वृत्तं पुष्पिताग्रा नाम ।
चलकिशलयवत्यशोकशाखा तव चरणाहतिमात्रपुष्पिताग्रा ।
शशिमुखि सखि मुञ्च मानमस्या मदनमहोत्सव एष याति शून्या ॥
इयमप्यौपच्छन्दसिकं विशेषसंज्ञाज्ञापकार्थमत्रोच्यते । १०

वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितम् ।
पुष्पिताग्राभिधं केचिदौपच्छंदसिकं तथा ॥ ११

स्यादयुग्मके रजौ रजौ समे तु जरौ जरौ गुरुर्यवात्परा मतीयम् । १२

यस्य विषमे पादे रगणजगणौ रगणजगणौ समे जगणरगणौ जगणरगणौ गुरुश्च तद्वृत्तं यवात्परामतीयं भवतीत्यर्थः । यथा ।
मालवक्षितीश मासमुद्गशालि यवानतारिभूयमेदिनी समग्रा ।
आत्मसात्कृता त्वया रिपून् विजित्य समग्रसैन्यसंयुतानपि प्रसह्य ॥ १२

इति सुल्हणविरचितायां सुकविहृदयानन्दिन्यभिधानायां वृत्तरत्नाकरच्छंदोवृत्तौ अर्धसमवृत्ताध्यायः चतुर्थः ।

# पञ्चमोऽध्यायः विषमवृत्ताध्यायः

विषमवृत्ताध्याय आरभ्यते ।
मुखपादोऽष्टभिर्वर्णैः ।
परेऽस्मात् मकरालयैः क्रमाद्वृद्धाः ।
सततं यस्य विचित्रैः पादैः संपन्नसौंदर्यम् ।
तदभिहितममलधीभिः पदचतुरूर्ध्वाभिधं वृत्तम् ॥ १

प्रथमपादोऽष्टाक्षरः । परे च द्वितीयतृतीयचतुर्थाः । अस्मात्प्रथमपादात्मकरालयैश्चतुर्भिश्चतुर्भिरक्षरैः क्रमाद्वृद्धा वर्धिताः । क्रमादिति कोऽर्थः । द्वितीयो द्वादशाक्षरः । तृतीयो षोडशाक्षरः । चतुर्थो विंशत्यक्षर इति क्रमाद्वृद्धिं प्राप्ताः । सततमनवरतं इति विविधैश्चतुर्विंशतिप्रकारप्रस्तारेण विचित्रैः पादैः प्राप्तसौंदर्यं तद्वृत्तं आचार्यैः पदचतुरूर्ध्वं नामोक्तम् । यथा ।
आक्रम्यमाकृष्य धनु-
र्ये त्वया निहिता रणांगणे शरैः ।
रिपवः सहसा गतासवः क्षितिपते श्रुतम् ।
पदचतुरूर्ध्वं न चलन्ति तत्रैव निपतन्ति सशल्याः ॥
अत्र गणपादाभावात् गुरुलघू नेष्यते । अत्र च प्रस्तार्यमाणं चतुर्विंशतिधा भवति । षोडशद्वादशअष्टौ षोडशविंशतिद्वादश अष्टौ इत्यादि । १

प्रथममुदितवृत्ते ।
विरचितविषमचरणभाजि ।
गुरुकयुगलनिधन इह कलित आङा ।
विधृतरुचिरपदविततियतिरिह भवति पीडः ॥ २

प्रथममुदितवृत्ते पदचतुरूर्ध्वे विरचितान् विषमान् अष्टौद्वादशषोडशविंशत्यक्षरान् पदान् भजतीति तस्मिन् विषमचरणभाजि इह छंदसि आङा कलितो युक्तः पीडो भवति । आपीड इत्यर्थः । क्व सति इत्याह । गुरुकयुगलनिधने गुरुद्वयं निधनेऽवसाने यस्य तस्मिन्सति । कीदृशं इत्याह । विधृतरुचिराणां पादानां वितत्या यतिर्विरामो यस्य स तथोक्तः । अन्ते गुरुद्वयोपादनादत्र शेषाणां लघुत्वमस्यानुज्ञानं केदारेणेति मन्यामहे । यथा ।
ध्रुवमिह वनितानां
हृदि विनिहितदयितगुणानाम् ।
प्रसरति मलयमरुति विरहवतीनां
स्मरसुहृदि विजयिनि भवति नियतमसुविनाशः ॥
द्विगुरूणि छंदसि आपीडेति त्रयाणां गुरूणां अप्रवेशाच्छर्गण्ड इति नाम नोक्तम् ।
इदमपि पूर्ववच्चतुर्विंशतिप्रस्तारो भवति । तेभ्यश्चतुर्विंशतिभ्यस्त्रीनवकृष्य समान्यभिधातुमाह । २

प्रथममितरचरणसमुत्थं
श्रयति जगति लक्ष्म ।
इतरदितरचरणजनितमपि च तुर्यं
चरणयुगकमविकृतमपरमिह कलिका सा ॥ ३

आपीडस्य प्रथमं तुर्यं चतुर्थं इतरचरणसमुत्थं द्वितीयपादं द्वादशाक्षरोपलक्षितं लक्ष्म श्रयति भजति । कोऽर्थः । प्रथमपदे द्वादशाक्षरः । द्वितीयोऽष्टाक्षरः । अपरमपि चरणयुगलमविकृतमप्रत्ययाभावमित्येवंलक्षणा कलिका नाम । मञ्जरीति वक्तव्ये छंदोभंगभयात् कलिकेत्युक्तमेकार्थत्वान्न दोषः । यथा ।
अधमजनसुहृदि कलिकाले
सुजनकृतविरोधे ।
सकलुषमुषि सपदि विधुवनायाः
तदनु विमनमनसि मुदमिह जनयति निवासा ॥ ३

द्विगुरुयुतसकलचरणांता
मुखचरणरचितमनुभवति तृतीयः ।
चरण इह हि लक्ष्म
प्रकृतमपरमखिलमपि यदि भवति लवली सा । ४

यस्यास्तृतीयः पादः प्रथमचरणरचितं लक्षणमनुभवति द्वाभ्यां गुरुभ्यां युता सकलचरणानामन्तो यस्याः सा तथोक्ता लवली नाम । अपरं लवल्यां सर्वमपि प्राक्तनं प्रस्तुतं पूर्ववदिति भवति । यथा ।
गगनतलममलमलिमेतत्
सपदि शशभृदयं अनलवितिकरौघैः ।
जनयति च लवल्याः
चलमिति सरसं भुविद्भविपरिणति(?) परिपीडः ॥ ४

प्रथममधिवसति यदि तुर्यं
चरमचरणपदमवसितिगुरुयुग्मा ।
निखिलपरमुपरितनसममिह ललितपादा
तदियममृतधारा ॥ ५

प्रथमं पादमष्टाक्षरं चरमचरणपदं पश्चिमपादस्थानं यद्यधिवसति । अपरमप्यन्यत्सर्वं उपरितनं पूर्ववत् । अन्ते गुरुद्वययुक्ता सुललितपदपंक्तिरमृतधारा नाम । यथा ।
शशधरमुखि सखि परिरम्भं
तव मम वपुषि मलयजरसनिषेकः ।
श्रवणपुटयुगलसुखकृदतिचतुरमभिहृद्या
वचनममृतधारा ॥

पिंगलनागस्तु पदचतुरूर्ध्वादिषु प्रथमपादविपर्यासे सति मंजर्यादि नामानि वीक्ष्यति । ५

## ॥ पदचतुरूर्ध्वप्रकरणम् ॥

सजमादिमे सलघुकौ च नसजगुरुकेष्वथोद्गता ।
त्र्यङ्घ्रिगतभनजला गयुता सजसा जगौ चरणमेकत पठेत् ॥ ६

प्रथमपादे सगणजगणसगणा लघुश्च तथा द्वितीयपादे नगणसगणजगणगुरवो भवन्ति त्रिसंख्योपलक्षितोऽङ्घ्रिस्त्रङ्घ्रिस्तृतीयः पादस्तस्मिन् गता भगणनगणजगणलघुगुरवस्तैर्युता । चतुर्थे चरणे सगणजगणसगणा जगणो गुरुश्च यत्र सा उद्गता नाम । एकत इति । प्रथमं द्वितीयेन सहाविलंबितं पठेदित्यर्थः । यथा ।
जितमत्सरा सुकृतिनोऽपि परिहृतकलंकबांधवाः ।
वीक्ष्य सपदि युवतिं विकृतिं नियतं प्रयाति विपुलोद्गतास्तनुः ॥ ६

चरणत्रयं भजति लक्ष्म यदि सकलमुद्गतागतम् ।
र्नौ भगौ भवति सौरभकं चरणे यदीह भवतस्तृतीयके ॥ ७

यद्युद्गतायास्तृतीये पादे रगणनगणभगणगुरवो भवन्ति तदा सौरभकं नाम वृत्तं भवेत् । यथा ।
मलयानिलः प्रियवियुक्तयुवतिजनतावियत्यतः ।
मंदमंदमयमेतितरां घनसारसौरभकमुद्वमन्निव ॥ ७

नयुगं सकारयुगलं च भवति चरणे तृतीयके ।
तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य खलु पूर्वतुल्यकम् ॥ ८

यद्युद्गतायास्तृतीये चरणे द्वौ नगणौ द्वौ सगणौ च भवतः तदा ललितं नाम । शेषमुद्गतावत् । यथा ।
ललितांगहाररमणीयमभिनवललितं समांसलम् ।
इयमतिनयति मुदा प्रमत्ता पुरतो वयस्य तव लास्यमुत्तमम् ॥ ८

## ॥ उद्गताप्रकरणम् ॥

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत्
त्रितयं सनजरगास्तथा ननौ सः ।
त्रिनपरिकलितजयौ

प्रचुपितमितमुदितमुपस्थितपूर्वम् ॥ ९

यस्य प्रथमे पादे मगणसगणजगणभगणा द्वौ गुरू एकतः । पृथक् अन्यत्त्रितयं पादत्रितयं कथमित्यर्थः । द्वितीये पादे सगणनगणजगणरगणा गुरुश्च तथा तृतीये पादे द्वौ नगणौ सगणश्चतुर्थे नगणत्रयं जगणयगणौ च तद्वृत्तं उपस्थितपूर्वं उपस्थितप्रचुपितमित्यर्थः । यथा ।
आरुह्यान्यभृतप्रिया लसत्सहकारं प्रकटीकृतनवमंजरिं सगर्वा ।
निजकलरवनिनदैः प्रकटयति रतिपतिमहोत्सवमालि ॥ ९

नौ पादेऽथ तृतीयके सनौ नसयुक्तौ प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम् ।
त्रितयमपरमपि पूर्वसदृशमिह भवति प्रततमतिभिरिति गदितं खलु वृत्तम् ॥ १०

तदेव पदचतुरूर्ध्वं तृतीये पादे नगणौ सगणनगणौ च भवतः प्रथमस्य चतुरूर्ध्वस्याङ्घिः प्रथमाङ्घ्रिवत् कृता यतिर्यस्य क्रियाविशेषणस्य तत्प्रथमाङ्घ्रिकृतयतिर्यथा भवति । एवमपरपादत्रयं पूर्वसदृशमिह तन्त्रे तद्वृत्तं आचार्यैर्वर्धमानं नामोक्तम् । यथा ।
पादेन स्वयमुन्नतस्तनीभिरशोकः प्रमदाभिरभिहतः प्रवर्धमानः ।
विकसितकुसुमसमृद्धिमनुभवति बकुलतरुरपि वरयुवतिमुखासवसिक्तः ॥ १०

अस्मिन्नेव तृतीयके पादे तजरा स्युः प्रथमे च विरतिरार्षभं ब्रुवन्ति ।
तच्छुद्धविराट्पुरः स्थितं त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥ ११

अस्मिन्नेव पदचतुरूर्ध्ववृत्ते तृतीये पादे तगणजगणरगणा भवेयुः, अपरं पादत्रयमपि पूर्वसमं भवति तदा शुद्धविराट्पुरःस्थितं आर्षभं वदन्ति शुद्धविराडार्षभमित्यर्थः। यथा।
बिभ्राणा वदनं शशांकबिंबसमानं कमलायतनयना कृशांगशोभिता ।
पीनोच्चपयोधरद्वया जनयति मुदमधिकतरां वनितेयम् ॥ ११

## ॥ उपस्थितप्रचुपितप्रकरणम् ॥

विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।
यच्छंदो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ १२

विषमाक्षराणि येषु ते पादा यस्मिन् विषमाक्षरपादं यदेवमेव अष्टौ दशसप्तनवाक्षरं वा सर्वपादैरसमं त्रिपादं षट्पादं वा दशधर्मवत् । यथा ।
दश धर्मं न जानन्ति धृतिराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तश्श्रांतः क्रुद्धो बुभुक्षितः ।
त्वरमाणश भीरुश्च लुब्धः कामी च ते दशः ॥ इति षट्पदी गाथा ।
इत्येवमादि अस्मिन् च्छंदस्यर्थे नोक्तं प्रयोगेषु दृश्यते तद्गाथेति विद्वद्भिरुक्तम् । मंगलगीतिकावेष्टकविपद्विध्रुवकचच्चरीपाद्धतिकाद्विपथकप्रभृति तत्सर्वं गाथासंज्ञमवगन्तव्यम् । छंदसामानंत्यात्प्रतिपदमभिधातुमशक्यं तत्सर्वसंग्रहणीयं एका संज्ञा कृतेति । १२

इति सुल्हणविरचितायां सुकविहृदयानन्दिन्यभिधानायां वृत्तरत्नाकरच्छंदोवृत्तौ विषमवृत्ताध्यायः पंचमः ॥

# षष्ठोऽध्यायः षट्प्रत्ययाध्यायः

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगुक्रिया ।
संख्या चैवाध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ १

इदानीं उक्तानां वृत्तानां षट्प्रत्ययानाह ।
पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ २
ऊने दद्याद्गुरूण्येवं यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातः छंदोविचितिवेदिभिः ॥ ३

पादे सर्वगुरौ यावतां वर्णानां वृत्तस्य पादस्तावंत एव गुरवो विलिख्यन्ते । यथा । चतुरक्षरच्छंदसि आद्याद्गुरोरधः अधोविभागे लघुं वर्णं न्यस्य स्थापयित्वा तदनंतरं न्यस्तलघोः सकाशात् शेषेभ्यो वर्णेभ्यो अधः किं स्थाप्यत इत्याह । यथोपरि तथा शेषं । यद्युपरि गुरुस्तदा अधस्तादपि गुरुर्यद्युपरि लघुस्तदा अधस्तादपि लघुः शेषम् । उपरि तुल्यो दीयते इत्यर्थः । तेन लघोरनंतरं त्रीणि गुरूणी स्थाप्यन्ते । भूयः पुनरपि कुर्यादमुं विधिमिति । लघुं न्यस्य गुरोरधः यथोपरि तथा शेषमिति पुनरप्यमुं विधिं कुर्यात् । यदा उपरि गुरुर्भवति लघुं न्यस्य गुरोरध इति विधेरभावाद्यः पूर्वदेशादूने दद्याद्गुरूणि इति ऊनप्रदेशो गुरुभिः पूर्यत इत्यर्थः । एवमनेन प्रकारेण तावन्न्यासः कर्तव्यो यावत्सर्वलघुः पदो भवति । प्रस्तार्यते इति प्रस्तारः वर्णानां विन्यासविशेषः । एवं चतुरक्षरपादे षोडशवृत्तानि भवन्ति । छंदांसि विलीयन्ते अस्यामिति छंदोविचितिश्छंदःशास्त्रम् । प्रस्तारो व्याख्यातः । २-३

इदानीं नष्टं व्याख्यातुमाह ।
नष्टस्य यो भवेदंकः तस्यार्धेऽर्धे समे च लः ।
विषमे चैकमाधाय तदर्धेऽर्धे गुरुर्भवेत् ॥ ४

प्रस्तारदर्शितानां वृत्तानां मध्ये यद्वृत्तं नष्टं लुप्तं भवति तस्य नष्टस्य यो भवेदंक एकादिसंख्या तस्य अर्धेऽर्धे समे च अंके सति लो लघुर्भवति । विषमे एकं आधाय प्रक्षिप्य तस्यार्धेऽर्धे गुरुर्भवेत् । यथैतस्मिंश्चतुरक्षरे छंदसि पंचमं वृतं नष्टम् । तस्य अंकः पंच स च अर्धं न प्रयच्छति । सैकः क्रियते तदा षड्भवन्ति । ते अर्धं क्रियन्ते । अर्धितास्त्रयो भवन्ति । तदर्धे गुरुः प्राप्यते पुनस्त्रयोऽर्धं न प्रयच्छन्ति । सैकाश्चत्वारः । तेऽपि अर्धस्तदर्धे पुनर्लब्धो गुरुद्वयोः समत्वात् । तदर्धे लघुः प्राप्यते पुनरेकोऽर्धं न प्रयच्छति । सैकोर्द्व्यः तदर्धे पुनरपि गुरुरेव लभ्यते । इत्थं नष्टस्योदाहरणम् । तथा च । आद्यौ द्वौ गुरू ताभ्यां परको लघुस्ततो गुरुरिति । ऽऽ।ऽ एतच्चतुरक्षरे छंदसि पंचमं वृत्तं भवति । ४

उद्दिष्टं व्याख्यातुमाह ।
उद्दिष्टं द्विगुणानाद्यादुपर्यंकान्समालिखेत् ।
लघुस्था ये तु तत्रांकास्तैः सैकैर्मिश्रितैर्भवेत् ॥ ५

केनचित्तद्वृत्तं प्रस्तार्यकतमत् इति संख्यापरिज्ञाना उक्तं तदुद्दिष्टमुच्यते । पूर्वत्र वृत्तं न ज्ञायते । अतः संख्यया नष्टमुद्ध्रियते । अत्र पुनर्वृत्तं ज्ञायते संख्या न ज्ञायते अतः संख्यापरिज्ञानार्थं उद्दिष्टमिदमुच्यते । तस्य उद्दिष्टवृत्तस्य प्रथमादक्षरादारभ्य उपरि द्विगुणानंकान् समालिखेत् । यथा । अस्मिन्नेव चतुराक्षरे छंदसि एकं वृत्तं उद्दिष्टं तस्य द्वौ वर्णौ गुरू ततो लघुस्ततोऽपि गुरुः । तत्र उद्दिष्टे वृत्ते लघुनि तिष्ठन्तीति लघुस्था ये पुनरंकाश्चत्वारः तैश्चतुर्भिः सैकैः एकेन सहितैः पंचभिरुद्दिष्टं भवेत् । उद्दिष्टसंख्या भवेत् । चतुरक्षरायां जातौ तत्पंचमं वृत्तं भवतीत्यर्थः ॥ ५

एकद्व्यादिलगुक्रियार्थमाह ।
वर्णान् वृत्तभवान् सैकान् औत्तराधर्यतः स्थितान् ।
एकादिक्रमशश्चैतानुपर्युपरि निक्षिपेत् ॥ ६
उपान्त्यतो निवर्तेत त्यजन्नैकैकमूर्ध्वतः ।
उपर्याद्याद्गुरोरेवमेकद्व्यादिलगुक्रिया ॥ ७

यावंत एव वृत्तभवा वर्णा तावत एव सैकान् एकसहितान् यथा । चतुरक्षरजातौ चत्वारो ये वर्णास्तान् सैकान् पंच । औत्तराधर्यतःस्थितान् उपर्युपरिभावेन स्थितान् एकादिक्रमेणैव एतानुपरि उपरि निक्षिपेत् निदध्यात् । उपान्त्यतो अन्त्यसमीपान्निवर्तेत व्याद्युद्येत । त्यजन् परिहरन् एकैकं ऊर्ध्वभागात् । एवमनेन प्रकारेण कस्मादियं एकद्व्यादिलगुक्रियां प्रवर्तत इत्याह । उपर्याद्याद्गुरोरिति उपरिस्थितान् आद्याद्गुरोः । कोऽर्थः । सर्वगुरुवर्णवृत्तसकाशात् इत्यर्थः । आद्यं किल सर्वगुर्वक्षरमेकं वृत्तं परिकल्पते । एतच्च प्रस्तारे दर्शितं यथा ।

‘पादे सर्वगुरावाद्याल्लघुं न्यस्ये’ति तेन तस्मात् अध इयं एकद्व्यादिलगुक्रिया प्रवर्तते । तत्र पंचसु वर्णेषु उत्तराधरभावेन स्थापितेषु अधःस्थित एकस्तदुपरिस्थे निक्षिप्यते । स च तथैव तिष्ठति त्यजन्नेकैकमूर्ध्वत इति वीप्सवशादेकदैव स्थितिमंतरेण निक्षिप्तत्वात् पुनर्निक्षेपभावादेकैकत्यागश्च न संभवति तस्मात्स्वरूपेण स्थित एव उपरि क्षिप्यते । ततो द्वितीये स्थाने द्वौ वर्णौ भवतः तौ तृतीयेन क्षिप्येत तत्र त्रयो भवन्ति । तच्च चतुर्थे निक्षिप्यन्ते ते चत्वारो भवन्ति । ‘उपान्त्यतो निवर्तते त्यजन्नेकैकमूर्ध्वतः’ उपरितनमेकं त्यज्यते तत्र न क्षिप्यते इत्यर्थः । वीप्सा त एव अधोभागात् पुनर्निक्षेपे क्रिया प्रवर्तते तेन अधःस्थित एव एको द्वितीये स्थाने निक्षिप्यते तत्र च त्रयो भवन्ति । तच्च तृतीये निक्षिप्यन्ते तत्र षट्भवन्ति उपरि एकं त्यजन्निवर्तेत । आद्यं एकं वृत्तं सर्वगुरुः तस्माद्देकद्व्यादिलगुक्रिया प्रवर्तते । तत एकः सर्वगुरुः चत्वारि द्विलघूनि षट्त्रिलघूनि चत्वारि चतुर्लघूनि एकं सर्वलघुः एषा लगुक्रिया सर्वलघुप्रस्तारेण प्रतीयते अस्यास्तु एष एव क्रमः पंचाक्षरादिवृत्तेष्वपि । ६-७

[ उदाहरणम् –

१

| |
|---|
| ४१ |
| ६३१ |
| ४३२१ |
| ११११ |

]

संख्यार्थमाह ।

[लगुक्रियाङ्कसन्दोहः भवेत्संख्याविमिश्रिते ।
उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥ ८ ]

लगुक्रियायां ये अंकास्तेषां सन्दोहस्तस्मिन्विमिश्रिते पीडीकृते संख्या भवेत् । इयं तावद्धारणं स्यात् । तथा एकश्चत्वारः षट्चत्वारः एकमेषामेकीकृता वै षोडश भवन्ति चतुरक्षरजातौ प्रस्तार्यमाणायां षोडश वृत्तानि भवन्तीत्यर्थः । स च प्रस्तारः पूर्वमेव व्याख्यातः ।

पक्षान्तरमाह ।

उद्दिष्टस्य वृत्तस्य उपरि ये अंका द्विगुणास्तेषां समाहारः एकीभावः सैको वा अथवा जनयेदुत्पादयेदिमां संख्याम् । यथा । चतुरक्षरजातौ द्विगुणा ये अंका उपर्यारोपितास्तेषां समाहारः पंचदश सैकः षोडशेति । ८

अध्वार्थमाह ।

संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ।
वृत्तस्यांगुलिकीं व्याप्तिमधः कुर्यात्तथांगुलम् ॥ ९

चतुरक्षरजातौ या षोडशसंख्या स्याद्द्विगुणा द्वात्रिंशतिः एकोना एकरहिता एकत्रिंशतिः सद्भिः पण्डितैरध्वा मार्गः प्रकीर्तितः । कथम् । वृत्तस्य आंगुलिकीं अंगुलप्रमाणां व्याप्तिं कुर्यात् । ९

अधुना पुनरपि कविरन्वयपूर्वकं पित्रा सह सात्मानं निर्द्दिशति ।

वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता ।
विप्रः पव्येकनामा विमलतरमतिः शैवतत्वावबोधे ॥ १०
केदारस्तस्य सूनः शिवचरणयुगाराधनैकाग्रचित्तः ।
छंदस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्याम् ॥ ११

वंशेऽन्वयेऽभूज्जातः कश्यपस्य कश्यं सोमं पिबतीति कश्यपः कश्यपशब्देन यद्यपि सुरा एवाभिधीयते कथ्यते । तथाप्यत्र सोममुच्यते सुरापानस्य ब्राह्मणे दिजे निषिद्धत्वात् अन्वयार्थेन वंशार्थेन क्रनुयायित्वमुक्तं स्यात् (?) । शिवस्य एते शैवा ये सिद्धान्तास्तेषां वेत्ता । ‘विद-विचारणे’ इत्येतस्य रूपं न पुनः ‘विद-ज्ञाने’ । तस्याशक्यत्वात् । यो हि विचारयति चिन्तयति सो अवश्यं वेत्ति नह्यविदितं विचारयितुं शक्नोति विशेषेण प्रतिपूरयति स्वर्गापवर्गादिकानि स विप्रः विमलतरमतिः विमला विस्तीर्णा तरला मनोहरा मतिर्यस्य अतिशयेन विमलमतिः । क्व । शैवशास्त्रावबोधे । केदारनामा तस्य पुत्रः शिवः शान्तो देवताविशेषः तस्याराधनं तत्र एकाग्रं तन्निष्ठं चित्तं यस्य सः । तथा तेन केदारेणाभिरामं रमणीयं मनोहरं छंदः प्रकर्षेण विरचितं वृत्तरत्नाकराख्याम् ॥ १०-११

इति पंडितश्रीसुल्हणविरचितायां सुकविहृदयानन्दिन्यभिधानायां छंदोवृत्तौ षट्प्रत्ययाध्यायः षष्ठः समाप्तः ॥

श्रीः ।
शुभं भूयाल्लेखकस्य ।
वसुयुग्मे ....... शुक्लश्च पंचम्यां हंसराजेन मुनिनाऽलिखट्टीका मनोरमा ॥